अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–४२

श्रीरङ्गोजीभट्टविरचित:

# अद्वैतचिन्तामणि

(मूलमात्रम्)

डॉ. दिनेश: रसाल:

प्रधानसंपादक:
आचार्य: श्रीनिवास: वरखेडी
कुलगुरु

संपादक:
आचार्य: मधुसूदन: पेन्ना
संचालक: संशोधन–प्रकाशनविभाग:



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालय:
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 42

श्रीरङ्गोजीभट्टविरचितः

# अद्वैतचिन्तामणिः

**(मूलमात्रम्)**

डॉ. दिनेशः रसालः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — **अद्वैतचिन्तामणिः**

संकलयिता — डॉ. दिनेशः रसालः

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — 125.00

आय.एस.बी.एन. — 9788183154208

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

।। श्रीः ।।

उपोद्घातः ।

**राजीवराजिजीवनमौलि, धनुर्बाणपाशसृणिधारि।**
**तरुणारुणाभमरुणं, तरुणं युगुलं भजे किमपि।।१।।**

**(क)**

## ग्रन्थकर्तुर्वंशपरिचयः।

अथाऽयमुपक्रम्यतेऽद्वैतचिन्तामणिर्नाम निबन्धो मुद्रयित्वा प्रकाशयितुम्। अस्य निर्माता किल प्रसिद्धो विपश्चित् 'रङ्गोजीभट्ट' नामा। एतेन प्रकृतग्रन्थाऽवसाने 'वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा। भट्टोजीभट्टसंज्ञं तं गुरुं नौमि निरन्तरम्' इति भट्टोजीदीक्षितः स्वगुरुत्वेनोपश्लोकितः। (बृहद्) वैयाकरणभूषणस्यारम्भे 'पितरं रङ्गोजिभट्टाभिधम्' 'भट्टोजीदीक्षितमहं पितृव्यं नौमि सिद्धये' इत्यादिना पद्यकदम्बेन तद्रचयिता श्रीकौण्डभट्टो भट्टोजीदीक्षितरङ्गोजीभट्टयोर्भ्रातृत्वमवागमयत्। रङ्गोजीभट्टश्च भट्टोजीदीक्षितस्य कनीयान् भ्राताऽऽसीदिति तदीयगुरुत्वोक्त्या सिद्धमेव।

किञ्च भट्टोजीदीक्षितेऽस्य गुरुत्वोक्तिर्न केवलं ज्येष्ठभ्रातृत्वनिबन्धना, किन्तु तदन्तेवासित्वनिबन्धनेति प्रतिभाति। वयसा गुरुषु गुरुशब्दमप्रयुज्य मन्त्रविद्ययोर्दातर्येव तथा प्रयुञ्जानानामभियुक्तानां व्यवहाराश्चाऽत्र प्रमाणतयोपतिष्ठन्ते।

अद्वैतदीपिका, वेदान्ततत्त्वविवेक, भेदधिक्कारादिग्रन्थनिर्माता नृसिंहाऽऽश्रम-यतिरपि 'तदुक्तं श्रीनृसिंहाऽऽश्रमगुरुचरणैः' इति प्रकृतग्रन्थेऽसकृदनेन प्रमाणतयोपन्यस्त इति सोऽप्यस्य गुरुरासीदिति वक्तुं शक्यम्।

ग्रन्थान्तपुष्पिकायाञ्च 'इतिश्रीमदानन्दाश्रमचरणसेवापरायणेन रङ्गोजीभट्टेन विरचितोऽद्वैतचिन्तामणिः समाप्तः' इत्युक्तेरानन्दाश्रमाऽऽख्यो यतिरप्यस्य पूज्य आसीदिति ज्ञायते। कोऽसावानन्दाश्रमः? अपि निर्मिता अनेन केचिद् ग्रन्थाः? इत्यादिकमवगन्तुं न किञ्चिदपि द्वारमुपलभ्यते।

भट्टोजीदीक्षितेन स्वकृते 'शब्दकौस्तुभ'नामके निबन्धे 'लक्ष्मीधरः' स्वपितृत्वेन वर्णितः, तथा च रङ्गोजीभट्टस्याऽप्ययमेव जनक इति सिद्ध्यति।

कौण्डभट्टश्च स्वकृत'पदार्थदीपिका'ऽवसाने 'बालबुद्धिप्रकाशार्थं पदार्थानां प्रदीपिका। रङ्गोजीभट्टपुत्रेण कौण्डभट्टेन निर्मिता' इतिपद्येनाऽऽत्मानं रङ्गोजीभट्टपुत्रत्वेन वर्णयति।

इत्थञ्च लक्ष्मीधरस्य सूनुः, नृसिंहाश्रमाऽऽनन्दाश्रमयोरन्तेवासी, भट्टोजीदीक्षि-तस्य कनीयान्, कौण्डभट्टस्य जनकः किलैतद्ग्रन्थकर्तेति निर्विचिकित्सम्।

## ग्रन्थकर्तुः समयनिर्णयः।

विश्वविख्यातवैदुषीवैभवस्य भट्टोजीदीक्षितस्य समयनिर्णयेनैव प्रकृतग्रन्थ-कर्तुरपि समयो निर्णेतुं शक्य इति प्रथमतो भट्टोजीदीक्षितसमय एव निर्णीयते।

१६५० मिते ख्रीस्ताब्दे भारतसम्राजो दिल्लीश्वरस्य 'शहाजहान'-नाम्नः प्रतापभास्वतो मध्याह्नवेलायां विकस्वरकमलायमानतामासेदुषा, सर्वतन्त्रस्वतन्त्रसञ्ज्ञा-रिनिरुपमधिषणावैभवेन, नानानिबन्धरचनावाप्तयशसा, पण्डिराजजगन्नाथेन स्वकृते 'मनोरमाकुचमर्दनम्' इत्याख्यनिबन्धस्योपोद्घाते ''इह केचिन्निखिलविद्वन्मुकुटम-यूखमालालालितचरणानां शेषावतंसानां श्रीकृष्णपण्डितानां प्रसादादासादितशब्दा-नुशासनास्तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवशंवदीभवन्तः प्रक्रियाप्रकाशं स्वयं निर्मितायां मनोरमायामाकुल्यकार्षुः। सा च-प्रक्रियाप्रकाशकृतां पौत्रैरस्मद्गुरुपण्डित-वीरेश्वराणां तनयैर्दूषिताऽपि स्वमतिपरीक्षार्थं पुनरस्माभिर्निरीक्ष्यते' इत्युक्तवता भट्टोजीदीक्षितः 'प्रक्रियाप्रकाश'कर्तुः शेषकृष्णस्य शिष्यः प्रत्यपादि, स्वयञ्च शेषकृष्णात्मजवीरेश्वरपण्डितस्य शिष्य इति। सुतरामेतावतैतदीयसमयात् विंशतिवर्ष-पूर्वभाविता भट्टोजीदीक्षितस्याऽपि प्रौढेः समयस्य सम्भाव्यता नाऽसमञ्जसेव। तद्भ्रातू रङ्गोजीभट्टस्याऽपि न एव स्थितिसमय इति परिशेषादेव सिद्धम्।

अत्र १६३५ मितख्रीस्ताब्दीयो नीलकण्ठशुक्लाख्यः पण्डितः स्वरचितग्र-न्थान्ते भट्टोजीदीक्षितं स्वगुरुत्वेन बोधयन् मत्सम्भावितप्रकृतग्रन्थकृत्तत्समसमयता-बोधने साहायकमाचरति।

## ग्रन्थकर्तुर्जातिधर्मादिपरिचयः।

भट्टोजीदीक्षितनागोजीभट्टप्रभृतयः काशीनिवासिनो दाक्षिणात्यमहा-राष्ट्रब्राह्मणा आसन्निति तद्विषये प्रचलिताभिरसङ्ख्याभिः कथाभिः सिद्धम्।

सुतरां रङ्गोजीभट्टोऽपि काशीवासी दाक्षिणात्यमहाराष्ट्रब्राह्मण एवेति निर्विवादम्।

'अद्वैतशास्त्रसारोद्धार' नामकोऽप्यनेन कश्चिदद्वैतवेदान्ते निबन्धो रचितः, यस्य प्रथमः परिच्छेद एवोपलभ्य। तं प्रकृतग्रन्थश्च मुहुर्मुहुरालोचयतः स्पष्टमिदं प्रतिभाति, यत् माध्व (वैष्णव) सम्प्रदायखण्डनाय बद्धपरिकरोऽयं भगवति वासुदेवेऽ सीमभक्तिभागासीदिति।

(ख)

## ग्रन्थसमालोचनम्।

यद्यप्यद्यत्वे प्रचरितेषु अद्वैतवेदान्तनिबन्धेषु प्रकरणनिरूपणपराः सिद्धान्तसा-मञ्जस्यप्रवणाः परमतनिराकरणबद्धपरिकराः शास्त्रदिग्दर्शनकुतूहलविधायिनः, सन्त्ये-वाऽध्ययनाऽध्यापनपरिशीलनादिषु विशेषोपयोगिताभाजः पञ्चदश्यादयः शारीरकभा-ष्यादयोऽद्वैतसिद्ध्यादिप्रमुखाः सिद्धान्तलेशादिजातीया नानाविधा एव निबन्धतल्लजाः, तथाऽपि विविधाऽभिरूपोपज्ञताऽऽस्पदानि, नैकविधप्रतिभाविजृम्भमाणानि, प्राची-नाऽर्वाचीनसाधारणानि, बहुश्रुतैरप्यश्रुतचराणि, प्रचुरदर्शिभिरप्यनवलोकितानि, कानिचिन्निबन्धरत्नानि स्वप्रकाशकारणसमयवशात् शास्त्रदिदृक्षु जनोद्योगात् राजकीयविशिष्टाऽनुसन्धानमहिम्नो वा, कदाचित् कुतश्चित् क्वचिच्च तथा लब्धप्रकाशानि भवन्ति, यथाऽनितरसाधारणीं कुतूहलितामासादयन्ति। तादृशेष्वेवै-षोऽद्वैतचिन्तामणिरप्यन्यतं निबन्धरत्नम्।

अयं हि ग्रन्थो यथा नाऽत्यल्पपरिमाणस्तथेयत्तया न महत्स्वपि परिगणनाऽर्हः यद्यपि कर्त्रा यादृशा दिशा निबन्धुमुपक्रान्तोऽयं, तादृशैव पुङ्खाऽनुपुङ्खनिरूपणपरायणया न्यमन्तस्यत्, तदाऽति महतीमेवेयत्ता-मासादयिष्यत्। किन्तु मन्ये नैतावता निबन्धा फलेग्रहिमनोरथोऽभविष्यत्। तथा हि-अस्य ग्रन्थस्याऽवलोकनेन बाढमेतत्प्रतीयते यन्निबन्धुरभिप्रायस्तावत्अद्वैत-सिद्धान्तपरमफल, साक्षात्तदुपायोपवर्णनपूर्वकं प्रधानमल्लनिबर्हणन्यायेन द्वैतसिद्धान्तबद्धपरिकरनैयायिकप्रतिद्वन्द्वितानिरसनमुखेनाऽवान्तर-समानतन्त्रैकदेशिमतदौर्बल्यप्रदर्शनेन च संक्षेपेणाऽद्वैततत्त्वमधिजिगमिषूणाम-नायासेन प्रवृत्तिसाफल्यमुद्दिश्य किमपि ग्रन्थरत्न निबन्धनीयमिति।

एवं स्थिते सिद्धान्तनिरूपणस्य, खण्डनविस्तरस्य, प्रकृतसिद्धान्तप्रमेय-साकल्यप्रतिपादनस्य वा यद्युपपादनमभविष्यत्, कथमिवोक्ताऽधिकारिणामिहाऽना-यासता समपत्स्यत। अत एव स्वप्रतिकूलाऽखिलमतान्येव प्रत्यवतिष्ठापयिषुणाऽपि जैमिनिकपिलपतञ्जलिप्र-भृतिसिद्धान्तितविषयाननिराकृत्यैव कणभक्षाऽक्षपादोपज्ञ प्रमेयप्रमाणलक्षण-विभागप्रक्रियां प्रदूष्य तत्राऽऽपत्त्यनुपपत्तीश्च प्रदर्श्य तदीयसरणय-एवाऽभञ्जिषत। प्रासङ्गिकञ्चाऽन्यदीयमपि किञ्चिददूष्येव विबुभूषयिषुणा स्वरादुधान्तम्।

उक्तचरमेवैतत्, यद्विस्तराद्बिभ्यदयं निबन्धा सिद्धान्तसिषाधयिषितान् नाऽखिलाऽर्थान् प्रत्यपीपदत्, तथाऽपि परमफलसाक्षादुपायभूततत्त्वमस्या-दिमहावाक्यजन्यज्ञानं प्रतिपिपादयिषताऽनेन नान्तरीयकप्रतिपाद्यतत्त्वम्पदार्थयोः शक्तिभक्तिव्यवस्थां विशदय्य, सैद्धान्तिकीमखण्डाऽर्थतां निर्विवक्षुणा केचन विषयाःपरक्षुण्णा अपि निरू-पणवैदग्ध्या तथोपापादिषत, यथाऽननुशीलिताऽऽकराणां चेतःसु नव्यायमानतां भजन्ते।

## ग्रन्थस्य विषयसमालोचनम्।

तथा हि-बहुसम्मतमपि योग्यताऽऽकाङ्क्षाऽऽसत्तीनां शाब्दबोधकारणत्वम-भ्युपेत्य प्रौढ्या प्रकारान्तराऽनुसरणेन वा निराकारि। किं बहुना तात्पर्यज्ञानस्याऽपि तथात्वं तथा कृतम्। एवमेव साक्षिणः शुद्धचित्प्रतिबिम्बत्वं, शाब्देतरज्ञाने निर्विकल्पत्वनिरसनं, तत्त्वमस्यादिश्रुतेरखण्डाऽर्थत्वेऽपि वाक्यत्वं, शुद्धचितः सत्याऽऽदिपदाऽवाच्यत्वञ्चाऽन्यच्च प्रासङ्गिकमेवंजातीयं स्वशैल्या वर्णितं तथैवाऽऽ-स्थेयम्।

अन्ये च विषया यद्यप्यद्वैतवेदान्तसिद्धान्ताऽनुमोदिता एव परिष्कृता उपस्कृताश्च ग्रन्थकृता, तेषां श्रृङ्गग्राहिकतयाऽचोपवर्णनस्य नाऽतीवोपयोगितां मन्यमानेन तथारूपेण सूचीपत्रे प्रदर्शिततया च मया नेहोल्लेखः कृतः। परमतनिराकरण एव तावत् प्रकृतनिबन्धकृता नानाजातीयाः सरणयः प्रदर्शितास्ता एव नूनं समीक्षकाणां चमत्कारितामधिकमादध्युरिति तास्वेव काश्चन प्रदर्श्यन्ते।

तमसो द्रव्यत्वम्, आकाशदिक्कालानामीश्वराऽभेदः, मनसोऽन्यथासिद्धत्वञ्च दीधितिकृदादिनव्यनैयायिकैरपि प्रतिपादितानीति वस्तुगत्या नवीनान्येव।

किन्तु वायोः पृथिवीविशेषत्वं, चक्षुरिन्द्रियस्य तदितरेन्द्रियकार्यनिर्वाहकता-प्रदर्शनमुखेन स्थाप्यमानमिन्द्रियाणामेकत्वञ्च, प्रायेण नव्यप्रकारकमेवाऽऽभाति।

एवं तार्किकाऽभिमतगुणेषु केषाञ्चिन्निरसनं, केषाञ्चिदन्यत्राऽन्तर्भावः, परेषामितरथात्वं, प्रेक्षावतां मनोविनोदाऽऽवहमेव। आत्मतत्त्वे, जीवतत्त्वे, साक्षितत्त्वे चाऽद्वैतसिद्धान्तसम्प्रदायाऽऽगता एव पन्थानः परिशीलिताः, परन्तूक्तिवैचित्र्यमात्रेण।

निबन्धे ह्यस्मिन् ग्रन्थकृत् परमतखण्डनस्वमतप्रमेयस्थापनरूपं बहिरङ्गकारणं, तत्त्वम्पदार्थसाक्षात्परम्परासाधारणसम्बन्धनिरूपणरूपमन्तरङ्गकारणञ्चाऽभिप्रयन् निब-द्ध्यमानग्रन्थं द्विधा परिचिच्छेदेति परिच्छेदद्वैविध्ये प्रयोजकं युक्तमाकलयामि।

तत्त्वम्पदार्थनिरूपणपरे द्वितीयपरिच्छेदे हि निरूपितान् व्यस्ततया ग्रन्थान्तरेषु वर्तमानान् विषयान् स्वाऽभिमतपरिपाट्या संजिघृक्षमाणः संक्षिप्यैवोपपादयति स्म। अत एवाऽनवीकृतिमेषु सम्भावयता प्रातिस्विकरूपेण सूचीपत्रे निर्दिष्टतया च ते मया नेहोदलेखिषत।

मध्यस्थदृष्ट्या समालोच्यमानेऽमुष्मिन् निबन्धे समुपवर्णिता विषया आकरा-दिसागरपारदृश्वनां चेतश्चमत्कारं मा नाम तानिषत, खण्डनमण्डनकुतुकिनां प्रचण्डपाण्डित्यजुषाञ्च विशेषकोटिपरम्पराऽनिरूपणेन कौतुकं मा नाम धिषत, इदम्प्रथमतया प्रविविक्षूणाञ्च स्वान्तानि मा स्म नन्दयन् तथाऽपि संक्षिप्तेनैव प्रकारेण परमतखण्डनपुरःसरं नव्यप्रणालीदिग्दर्शनपूर्वकञ्च प्रकृतशास्त्रप्रतिपित्सिततत्त्वबुभुत्सूनां मानसेषु निबन्धरत्नमिदं यथा संमदं सम्पादयिष्यति, न तथाऽद्यत्वे प्रचश्चूर्यमाणेषु ग्रन्थेष्वेकतमोऽपीत्थङ्कारं तथा कर्तुमर्हतीति ग्रन्थस्याऽस्योपादेयतां संमन्ये।

(ग)

## ग्रन्थसंशोधनप्रसाधनाऽवश्यवक्तव्यानि।

दिदृक्षुजनसौकर्याय चाऽत्र यावतामेव विषयाणां सूचीपत्रं, तथाऽयँविशेषप-राणां निर्देशाऽर्हशब्दानामकारादिवर्णक्रमाऽनुसारि मूचनिकान्तरञ्चोपनिबद्धम्। अत्र ग्रन्थकृता प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकृताञ्च नामानि, प्रकृतप्रमेयप्रतिपादनाऽ-वलम्बनतयोपदर्शितानां परःशतानां श्रुतिस्मृतिपुराणवचनानां तत्तदुपलब्धमूलग्रन्थतदध्यायपादश्लोकादिनिर्देश-श्चेत्येतानि महता श्रमेण योजितानि।

ग्रन्थकृता स्वगुरुत्वेनाऽसकृदुद्घोषितस्य नृसिंहाश्रमस्य प्रमाणतयोप-न्यस्तानामुक्तीनां मूलग्रन्थाऽऽधारमन्विष्याऽन्विष्याऽप्यनवाप्य सुतरां खेदं वहामि।

नृसिंहाऽऽश्रमस्य ग्रन्थत्रयमेवाऽद्यावधि मुद्रितमासाद्यते।

(१) वेदान्ततत्त्वविवेकः। मदीयगुरुचरणैः पूज्यवरमहामहोपाध्याय श्री पं. तैलङ्गरामशास्त्रिवर्य्यैः संशोधितः।

(२) भेदधिक्कारः श्री.म.म.पं. द्राविडलक्ष्मणशास्त्रिमहाशयैः संशोधितः।

(३) अद्वैतदीपिका। श्री पं. गोपालशास्त्रिभिः संशोधिता।

ग्रन्थत्रयमिदमसकृदवलोक्याऽपि तत्रैतद्ग्रन्थे प्रमाणतयोपन्यस्तासु नृसिंहाऽऽ-श्रमोक्तिष्वेकामपि नाऽध्यगच्छम्।

बहुकृत्वः शोधनश्रमभूरीकृत्याऽतीवाऽवदधता मया सुपरिशोधितेऽप्यत्र वर्णयोजकदोषेण, मानुष्यकसुलभस्खलनेन च लब्धाऽवसरा अशुद्धीर्मराल-प्रकृतयो गुणगृह्या विपश्चिदपश्चिमाः क्षमेरन्नेवेति दृढमाशासे।

दुर्लभतमोऽयङ्ग्रन्थो मया काशीस्थराजकीयपुस्तकालयादधिगतः। आदर्शान्तरञ्चाऽस्य ग्रन्थस्य न क्वाऽप्यधिगतवानस्मीति प्रायः शुद्धैनैकेनैवाऽमुना पुस्तकेन शोधनकार्यमारभे।

इदम्प्रथमेऽप्यत्र कार्ये वाराणसेयभूतपूर्वराजकीयसंस्कृतपाठालयप्रधा-नाध्यक्ष विविधविद्यानदीष्णविद्वद्ग्रेसरश्रीमत् Dr. A. Venis C.I.E. महोदयानामाज्ञावशंवदो राजकीयसरस्वतीभवनपुस्तकालयप्रधानाध्यक्षैर्विविध-दर्शनपरामर्शनकर्शितमतिभिः प्राच्यप्रतीच्योभयविद्यासम्भेदकृतावगाहैः पूज्यवरश्रीगोपीनाथकविराजमहोदयैः प्रकृतकार्यसम्पादनानुकूलसरणिप्रदर्शनादिना संवर्धितोत्साहश्च प्रावर्तिषि।

अथाऽस्मदीयदूरदृष्टोन्मीलनवशादकालमेव कालवशमुपगते श्रीमति वेनिस साहिबमहोदये एतद्ग्रन्थप्रकाशने प्रायो निरुत्साहतैव समपद्यत। मोघत्वं चोपजगाम परिश्रमः। किन्तु 'दुःखस्यानन्तरं सुखम्' इति नियतिनियमस्यानुल्लङ्घनीयत्वादेव ग्रीष्मावसाने जलदागम इव विविधग्रन्थनिर्माणसमुज्जृम्भमाणराकाशशाङ्कसङ्काशसुयशःसन्तानधव-

लीकृतदशदिशावकाशो विद्वत्कुलचूडामणिः श्रीमान् महामहोपा-ध्यायः डाक्टर गङ्गानाथ झामहोदयः पाठालयप्रधानाध्यक्षपदमलङ्कृतवान्।

अथ कृतयुग इव पुनः परावर्तिते एतदीये शासनसमये ग्रन्थरत्नमिदं प्रकाशयोग्यतामभजत्।

प्रीयतां चैतेन मामकीनेन व्यापारेण विद्वजननमनःसंमोदसम्पादनद्वारा सर्वान्तर्यामी भगवान् विश्वेश्वर इति प्रार्थयमान आवश्यकवक्तव्यान्तरविरहाद् विरमामि मुधा विस्तरादिति शम्।

काशीस्थराजकीयसंस्कृतपुस्तकालयः (सरस्वतीभवनम्), काशी

खिस्ते-इत्युपाख्यो नारायणशास्त्री

। श्रीः।

# अद्वैतचिन्तामणेः

## प्रकरणानि।

**अथ द्वितीयः परिच्छेदः**

। इति प्रकरणसूची ।



# ।। अद्वैतचिन्तामणिः ।।

**श्रीगणेशाय नमः ।। श्रीवासुदेवाय नमः ।।**

**सत्यज्ञानाऽऽनन्दरूपं वासुदेवं जगद्गुरुम् ।।**
**प्रणम्याऽद्वैतशास्त्रोक्तसिद्धान्तान् सम्प्रदर्शये ।।१ ।।**

विश्वेश्वराऽर्पणबुद्ध्याऽनुष्ठितैः नित्यनैमित्तिकाऽऽदिकर्मभिस्तत्त्व-ज्ञानप्रतिबन्धककल्मषनिवृत्तिर्जायते, ''धर्मेण पापमपनुदति'' इति श्रुतेः। ततः परमेश्वरप्रसादाद् विशुद्धाऽन्तःकरणस्य विवेक उत्पद्यते, ''आत्मा नित्यः तदतिरिक्तमनित्यम्'' इत्यनित्यत्वदोषदर्शनात्। ततो विषयेषु वैराग्यं जायते। ततः शमाऽऽदिसम्पत्तिः। ततो मुमुक्षा। ततः ''तरति शोकमात्मवित्'' इति श्रुत्या ज्ञानस्य मोक्षसाधनत्वमवगत्य जिज्ञासते। ततः ''त्यजतैव हि तज्ज्ञेयम्'' इत्यादिशास्त्रात् संन्यासस्य ज्ञानसाधनत्वमवगत्य तदर्थं संन्यस्यति।

ननु ज्ञानार्थं संन्यस्यतीत्यशुद्धम्, अधीतसाङ्गस्वाध्यायस्य गृहीतपदपदाऽर्थसंगतिकस्य संन्यासं विनाऽपि ''तत्त्वमसि'' ''सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यादिवाक्यात् आत्मज्ञानसम्भवात्।

न च चिन्मात्रविषयकं ज्ञानं मोक्षसाधनं, तच्च प्राङ् न वृत्तं, सत्यत्वादि-वैशिष्ट्यावगाहिबुद्धेरेव प्राग् जातत्वादिति वाच्यम्। समानाऽधिकरणपदानामे-कार्थपरत्वं, विशिष्टयोश्च समानसत्ताकभेदवत्त्वादभेदो बाधितः इत्यादितर्कप्रति-सन्धानवतः संन्यासश्रवणाऽव्यतिरेकेणाऽपि लक्षणया चिन्मात्रविषयक-ज्ञानसंभवादिति चेन्न। प्राथमिकज्ञानस्य चिन्मात्रविषयकस्याऽपि संशयरूपत्वेनाऽविद्यानिवृत्तावसाम-र्थ्यात्। सर्वमेककोटिकज्ञानं निश्चय एवेति न तत्संशय इति चेन्न। अस्मिन् सिद्धान्ते निश्चयत्वस्य जातित्वात्। तस्याश्चाऽविद्यानिवर्तकज्ञान एव फलबलेनाऽभ्युपगमात्। एककोटिकत्वमात्रस्य निश्चयत्वेऽगनभ्यासदशाऽऽपन्नजलज्ञानस्याऽपि निश्चयत्वात्प-श्चात्तज्ज्ञाने प्रामाण्यसंशयो न स्यात्। प्रामाण्यसंशयस्यातद्वत्तासंशयपर्यवसन्नत्वात्। तद्वत्तायाश्च जलज्ञानेनैव विषयीकृतत्वात्।

यत्तु कैश्चिदुक्तम्, ''प्रामाण्यं तद्वद्विशेष्यकत्वाऽवच्छेदेन

तत्प्रकारकत्वं, विपरीतसमूहाऽऽलम्बनाऽनुरोधात्। तत्रावच्छेद्यावच्छेदकभावस्य प्रागनिर्णयात् प्रामा-ण्यसंशयः'' इति। तन्न, एकस्मिन् धर्मिणि विशेषणद्वये भासमानेऽसति बाधकेऽवच्छे-द्यावच्छेदकभावो भासत इति तदुक्तरीत्यैवाऽत्रापि संशयजनकीभूतधर्मिज्ञान एव तद्भा-नसम्भवात्। अन्यथा गन्धप्रागभावावच्छिन्नो घटो गन्धवानिति बाधस्याऽसङ्की-र्णमुदाहरणं न स्यात्। विशेष्यत्वप्रकारत्वयोरिवाऽवच्छेद्याऽवच्छेदकभावसम्बन्धादीना-मपि ज्ञानवित्तिवेद्यत्वाऽभ्युपगमे बाधकाऽभावाच्च। न च संशयाऽनुपपत्तिरेव बाधिका, प्रकारत्वादेर्ज्ञानवित्तिवेद्यत्वत्यागेनाऽपि तदुपपत्तेः। नच निश्चयत्वस्याऽव्याप्यवृत्तित्वाज्जातित्वाऽनुपपत्तिः, सिद्धान्ते संशयरूपाऽवि-द्यावृत्तेर्भिन्नत्वेनाऽव्याप्यवृत्तित्वाऽभावात्। अनुकूलतर्काभावेनैतादृशनियमाऽ-भावाच्च।

अतएवोक्तं नृसिंहाऽऽश्रमगुरुचरणैः ''परमते व्याप्यवृत्तित्वं जातेः'' इति। तस्मादेककोटिकमप्याद्यं ज्ञानं संशयः। अथ वा निश्चयरूपमेवाऽऽद्यं ज्ञानम्। न चैवं संन्यासाऽऽदिवैयर्थ्यं, यथा नैयायिकादिमते शास्त्राऽध्ययनात् पूर्वमपि 'अहमीश्वरभि-न्नोऽहं देहभिन्नः' इति ज्ञानं मनसा जायमानमपरोक्षनिर्णयो भवत्येव, तथाऽपि तत् मिथ्याज्ञानादिनिवृत्तावक्षमं, श्रवणाद्युत्तरकालीनं तु क्षमं, स्वरूपविशेषात्। एवमेव संन्यासात् पूर्वकालीनमस्मन्मतेऽविद्यानिवृत्तावसमर्थं, संन्यासाद्युत्तरकालीनं तु समर्थमिति न कोऽपि दोषः।।

वस्तुतस्तु प्रतिबद्धत्वादाद्यं ज्ञानं नाऽविद्यानिवर्तकं, श्रवणादिना च प्रतिबन्ध-कीभूताऽसम्भावनादिनिवृत्तावप्रतिबद्धं ज्ञानमुत्पद्यते।

तदुक्तं स्कान्दे – ''मुख्याधिकारिणां णां प्रतिबन्धविवर्जितम्। ज्ञानमुत्पद्यतेऽन्येषां प्रतिबद्धं विजायते'' इति।

ततः कृतसंन्यासः श्रवणार्थं गुरुमुपसर्पति, ''तद्विज्ञानार्थं स गुरुमेवाऽभिग-च्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'' इत्यादिश्रुतेः; ''तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्। शाब्दे परे च निष्णातं ब्रह्मण्युपशमास्पदम्'' इति स्मृतेश्च। ततश्च तदधीनः सन् सर्वेषां भेदान्तानामद्वितीये ब्रह्मणि तात्पर्यं निश्चिन्त्येत्थं मनुते।

तथाहि – वैशेषिकमीमांसकाऽऽदिभिः स्वीकृताः पदार्थाः



श्रुतिस्मृतिविरुद्धा युक्तिविरुद्धाश्च। तदुक्तं स्कान्दे – ''केचित्प्रधानं त्रिगुणं स्वतन्त्रं केवलं जडम्। अणवः केचिदिच्छन्ति शब्दं केचन मोहिताः।। क्षणप्रध्वंसि विज्ञानं केचन भ्रान्तचेतसः। शून्यसंज्ञं सुराः केचित् निरुपाख्यं विमोहिताः।। केचिद् भूतानि चेच्छन्ति निसर्गं केचन भ्रमात्। तत्र तत्रैव तर्कांश्च प्रवदन्ति यथाबलम्।। सर्वे वादाः श्रुतिस्मृत्योर्विरुद्धा इति मे मतिः। पापिष्ठानां तु जन्तूनां तत्र तत्र सुरर्षभाः। प्राक्संस्कारवशादेव जायते रुचिरास्तिकी। कर्मणैव समुत्पन्नं समस्तमिति केचन। तच्छ्रुतिस्मृतिवादस्य विरुद्धं मुनिपुङ्गवाः।।'' इति।। तथा रामायणेऽयोध्याकाण्डे भरतं प्रति रामचन्द्रवाक्यम्-कच्चिन्न लोकायतिकान्नास्तिकांस्तात सेवसे। अनर्थकुशला ह्येते बालाः पण्डित-मानिनः।। धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः बुद्धिमान्वीक्षिकीम्प्राप्य निरर्थं प्रवदन्ति ते।।'' इति।। एवं च तद्वशान्नाऽद्वैतश्रुतेरन्यार्थता कल्पनीया, किन्तु निर्णीततात्पर्य-कश्रुत्यादिविरोधात एवाऽप्रामाणिका इति कल्पनीयम्।

तथाहि – वैशेषिकादिभिरभ्युपगते नवैव द्रव्याणीति नियमे न किञ्चिन्मानम् अन्धकारादेरपि द्रव्यत्वाङ्गीकारे बाधकाऽभावात्। रूपत्वादेः साधकस्य च सत्त्वात्। न च रूपप्रतीतिर्भ्रान्ता, बाधकाऽभावात्। न च मध्यमपरिमाणस्याऽऽरब्धता वाच्या, तया च स्पर्शशून्यस्य तस्याऽऽरब्धत्वानुपपत्तिः, रूपादिवत्तदुपपत्तेः। न च कार्यद्रव्यस्य स्पर्शवत्त्वनियमः, अप्रयोजकत्वेन नियमाऽसिद्धेः।

किञ्च द्रव्यत्वं न गुणाश्रयत्वं, रूपादावतिव्याप्तेः। तथाहि – बहूनि रूपाणि, रूपं रसात्पृथक्, इदं रूपं परमिदमपरमित्यादिप्रतीतिः सर्वजनसिद्धा। न चाऽसौ भ्रान्ता, बाधकाऽभावात्। अन्यथा घटेऽपि सङ्ख्यादिकं न सिद्ध्येत्। न च गुणादौ संख्यावैशिष्ट्यबुद्धिः परम्परासम्बन्धाऽवगाहिनी, वैपरीत्यस्याऽपि सुवचस्त्वात्। न चाऽऽश्रयैक्यमेव नियामकं, तथा सति जातावेव सङ्ख्याऽऽदिकमस्तु, जातीनां व्यक्त्यपेक्षयाऽल्पत्वेन तन्मात्रे संख्याऽऽद्यभ्युपगमे लाघवात्, नित्यद्रव्यमात्रे वा, अन्यत्र परम्परया तद्वैशिष्ट्यबोधोपपत्तेः। तावताऽपि गुणाश्रयत्वाऽनपायाच्च। न च गुणे गुणाऽङ्गीकारेऽनवस्था, उत्पत्तिज्ञप्त्यप्रतिबन्धिकायास्तस्या अदोषत्वात्। प्रमेयत्वादेरि-वाऽभेदसम्बन्धेन तदभ्युपगमेऽपि बाधकाऽभावाच्च। न च सम्बन्धविशेषेण गुणवत्त्वं द्रव्यत्वं, तच्च रूपादौ नाऽस्तीति वाच्यम्। स विशेषः समवायश्चेत्तस्याऽपि तत्र सत्त्वेन पूर्वोक्ताऽतिप्रसङ्ग एव। अन्यश्चेन्न स्वरूपसम्बन्धाऽतिरिक्तः कश्चिन्निर्वक्तुं

शक्यः। स्वरूपसम्बन्ध एवाऽस्त्विति चेत्तथाऽपि पूर्वोक्ताऽतिप्रसङ्गः, स्वरूपस्य तत्राऽपि सत्त्वात्। तस्मात् –

**गुणाश्रयत्वं द्रव्यत्वमिति मन्दप्रतारणा।।**
**तदनाश्रयभूतस्य पदार्थस्याऽप्रसिद्धितः।।१।।**

एवं द्रव्याणि नवेत्यप्यनुपपन्नमेव, वायोः पृथिवीविशेषत्वात्। अनुष्णाऽशीत-स्पर्शवत्त्वेन तथात्वस्यैवोचितत्वात्। न चाऽपाकजस्पर्शवत्त्वात्ततो भेदः, पृथिवीस्पर्श-स्याऽपि तत्परिमाणादेरिव पाकजत्वे प्रमाणाभावात्, सत्त्वे वा वायुस्पर्शस्याऽपि तथात्वं केन निवारणीयम्। नीरूपत्वादयं न पृथिवीति चेन्न। घ्राणवदनुद्भूतरूपाऽभ्युपगमे बाधकाऽभावात्। न चोद्भूतस्पर्शस्योद्भू-तरूपवत्त्वनियमः, तप्तवारिस्थतेजसि व्यभि-चारात्। न च प्रत्यक्षत्वाऽप्रत्यक्षत्वाभ्यां भेदः, घ्राणादौव्यभिचारात् वायोरपि प्रत्यक्षत्वाच्च। न च वायुस्पर्श एव गृह्यते, तेन च वायुरनुमीयत इति वाच्यं, घटादेरप्येवं सत्यतीन्द्रियताऽऽधत्तेः। चक्षुषा रूपं गृह्यते, त्वचा स्पर्शो गृह्यते, घटस्त्वनुमीयत इति तत्राऽपि वक्तुं शक्यत्वात्। न च द्रव्यस्य महत्त्वसमानाऽधिकरणोद्भूतरूपवत्त्वं विना बहिरिन्द्रियग्राह्यत्वाऽनुपपत्तिः, उद्भूतस्पर्शवत्तमात्रेणाऽपि स्पार्शनप्रत्यक्ष-त्वोपपत्तेः। अन्यथा द्रव्यप्रत्यक्षमात्रे महत्त्वसमानाधिकर-णोद्भूतरूपवत्वं प्रयोजकमित्यात्मनोऽप्यप्र-त्यक्षत्वं किं न स्यात्। न च वायुरयं न पृथिवीति महाजनानां व्यवहारबाधः, महाजनानां 'वयं मनुष्याः' इति व्यवहारस्येवाऽस्यापि भ्रमत्वे बाधकाऽभावात्, लाघवरूपबाधक-सत्त्वाच्च तस्मात् –

**न वायोः पृथिवीभेदे साधकं मानमस्ति वः।**
**अभेदसाधकं तूक्तं स्पर्शसाम्यं च लाघवम्।।२।।**

एवमाकाशदिक्कालानामीश्वरभेदे प्रमाणाऽभावादपि न नवैवेति नियमः, ईश्वरेणैव तत्कार्यनिर्वाहात् शब्दनिमित्तकारणतया क्लृप्तस्य तस्यैव समवायिकारण-ताऽभ्युपगमे लाघवाच्च। न च धर्मिग्राहकमानेन तेषां भेदसिद्धावीश्वरेण नाऽन्यथासिद्धिरिति वाच्यम्, धर्मिग्राहकमानं हि लाघवतर्कसहकृतं सत् क्लृप्तमीश्वरमेव विषयीकरोति, न त्वक्लृप्तं कालादि। तस्मात् –

**नेश्वराद् भिन्न आकाशः, कालश्चाऽस्ति तथा ककुब्।**
**स एव सर्वकर्तृत्वात् तैः कर्तव्यं करिष्यति।।३।।**

एवं मनःसत्त्वे प्रमाणाभावादपि न नव। न च व्यासङ्गाऽन्यथानुपपत्त्या





तत्सिद्धिः, अदृष्टविशेषेण बुभुत्सया वा तदुपपत्तेः। अन्यथा यदा मनश्चक्षुषा संयुक्तं, तदा श्रोत्रेण किं न संयुक्तं, तस्मात्तत्राऽगत्याऽदृष्टस्यैव नियामक-त्वाऽभ्युपगमे तेनैव व्यासङ्गोपपत्तौ किं मनसा।

ननु सुखाद्युपलब्धिः करणसाध्येत्यनुमानात्तत्सिद्धिरिति चेन्न। चक्षुरादिनाऽर्थान्तरात्। न च चक्षुषो रूपादिमद्वस्तुग्राहिणस्तत्राऽसामर्थ्यं, एकेनैवेन्द्रियेण तत्तद्गोल-काऽवच्छेदेन रूपादिग्रहोपपत्तौ करणनानात्वे प्रमाणाभावात्। तथाहि – चक्षुरेव सङ्कोचविकासशीलं नयनगोलकद्वारा निःसृतं सत् रूपादिकं गृह्णातु, कर्णशष्कुल्य-वच्छिन्नं सच्छब्दं, सर्वशरीरव्यापि सत् स्पर्शं, नासाद्याऽवच्छिन्नं सद्गन्धं, जिह्वाग्राव-च्छिन्नं सद्रसं गृह्णातु, अनवच्छिन्नं मदेव सुखदुःखादिकम्। एवं च चक्षुषैव सकलग्रहोपपत्तावनेकेन्द्रियकल्पने प्रमाणाऽभावः। न चाऽविनिगमः, संकोचविकास-शीलत्वेन वेगवत्त्वेन च चक्षुष एव तत्स्वीकारौचित्यात्। न चैकस्याऽवच्छेदकभेदेन ग्राहकत्वाऽग्राहकत्वं न दृष्टमिति वाच्यम्। एकस्या एव त्वचश्चक्षुर्गोलकाऽवच्छेदेन धूमस्पर्शग्राहकत्त्वं नाऽन्यावच्छेदेनेति त्वयाऽभ्युपगमात्। न चैवं जन्माऽन्धस्याऽपि रूपग्रहाऽऽपत्तिः, स्पर्शग्रहोऽपि वा न स्यादिति वाच्यम्। त्वन्मते बधिरस्याऽदृष्टविशे-षोपगृहीतकर्णशष्कुल्यभावाच्छब्दाऽग्रहवददृष्टविशेषोपग्रहाऽभावादेव स्पर्शग्रहेऽपि तद-ग्रहोपपत्तेः। तस्मात् –

**एकस्यैवेन्द्रियस्येह नानाऽवच्छेदभेदतः।**
**तत्तद्ग्रहणसामर्थ्यं नानेकं कल्पयेद् बुधः।।४।।**

तस्मान्नवैव द्रव्याणीत्ययुक्तम्।

एवं चतुर्विंशतिर्गुणा इत्यप्ययुक्तम् त्वया गुणे सङ्ख्याऽनभ्युपगमात्। औपचारिकोऽयं शब्दप्रयोगः, परम्परया सङ्ख्यामत्त्वाद्वा तथा व्यवहार इति चेन्न। तथा सति चतुर्विंशतिगुणा इति नियमाऽनुपपत्तेः। परार्धं गुणा इति ज्ञानस्य प्रमात्वाऽऽपाताच्च। किञ्च संयोगाऽभावातिरिक्तविभागे प्रमाणाऽभावान्न चतुर्विंशतिः, न च विनिगमकाऽभावादुभयोरपि भावत्वम्, कपालसंयोगा-देर्घटादिकारणतया भाव-कारणत्वे लघुत्वस्यैव विनिगमकत्वात्। न च शब्दकारणीभूतविभागस्याऽपि भावत्वे लाघवं, विभागस्य शब्दकारणत्वे प्रमाणाऽभावात्। वंशदलादिक्रियाव्यवहितक्षणोत्प-त्तिकसंयोगादेव शब्दोत्पत्तेः। भेर्याकाशसंयोगस्य शब्दकारणतया तत्सजातीयसंयो-गस्यैव कारणतौचित्यात्।।

नन्वादौ वंशदलादौ क्रिया, ततो विभागः, ततः पूर्वदेशसंयोगनाशः; तत उत्तरदेशसंयोगोत्पत्तिः न तु क्रियाव्यवहितोत्तरक्षणे इति चेन्न। अत्र प्रमाणभूतमन्वादिवचनाभावात् विभागपूर्वदेशसंयोगनाशोत्तरदेशसंयोगानामेकक्षणोत्पत्तिकत्वे बाधकाभावात्। अन्यथा क्रियाचतुर्थक्षणे विभागः, तच्चतुर्थक्षण एव पूर्वसंयोगनाश इति वदन्तं कः समादध्यात्। तस्मान्न संयोगाऽभावातिरिक्तो विभागः।

एवमन्योन्याऽभावाऽतिरिक्ते पृथक्त्वे ज्येष्ठत्वकनिष्ठत्त्वसंनिहितत्व-विप्रकृष्टत्वाऽतिरिक्तयोः परत्वाऽपरत्वयोः ज्ञानातिरिक्तद्वेषादौ च प्रमाणाऽभावादपि नाऽयं नियमः। न च ज्ञानद्वेषशब्दयोः पर्यायताऽऽपत्तिरतस्तयोर्भे, तथात्वे लज्जाश्रद्धाभयधैर्यादेरपि गुणाऽन्तरताऽऽपत्तेः। तेषां च ज्ञानविशेषत्वे किमपराद्धं द्वेषादिना।

एवं ज्ञानादीनां द्विक्षणावस्थायित्वनियमोऽप्यप्रामाणिकः, घटादेरिव तस्याऽपि प्रहरपर्यन्तमवस्थाने बाधकाभावात्। 'आप्रहरं घटमेवाऽनुभवन्नासम्' इति प्रतीतेर्लाघवसहकृतायाः साधकत्वाच्च। न च प्रत्यक्षाऽऽत्मविशेषगुणानामुत्तरोत्तरस्य पूर्वपूर्ववि-रोधित्वादुत्तरज्ञानेन तन्नाशः, एतादृशविरोधिताकल्पने प्रमाणाऽभावात्। अन्यथा पदार्थमात्रस्योत्तरोत्तरस्य पूर्वपूर्वविरोधित्वनियमात् सर्वं क्षणिकमिति वदन्तं को निवारयेत्।

एवमात्मविशेषगुणानां क्रमिकत्वनियमाऽभिधानमपि निष्प्रमाणं, हस्तपादाद्यवच्छेदेन युगपदेव सुखदुःखे अनुभवामीति प्रतीतेः। न चैव यौगपद्यांशे भ्रान्ता, बाधकाऽभावात्। गुणमात्र इवात्राऽप्यनियमेन एतस्य प्रक्रियामात्रत्वात्।

एवं शब्दस्य द्विक्षणावस्थायित्वाऽभिधानमपि निर्युक्तिकम्। एकस्येव शब्दस्य गव्यूत्यादिदेशव्यापिनश्चिरकालाऽवस्थायिनश्चोत्पत्तौ बाधकाऽभावात्। यः शब्दस्त्वया श्रुतः स एव मयाऽपीत्यादिसाधकसत्त्वाच्च। अन्यथा मेघादिशब्दानां जन्मसह-स्रेणाऽप्यग्रहप्रसङ्गाच्च।

एवं पृथिवीस्पर्शस्य पाकजत्वमपि निष्प्रमाणम्। यत्तु तस्याऽपाकजत्वे गोचाण्डालादिस्पर्शस्य विधिनिषेधौ न स्यातामिति, तन्न। तया सति गङ्गास्पर्शादिविध्यनुरोधेन जलस्पर्शस्याऽपि पाकजताऽऽपत्तेः। तत्र स्पर्शशब्दस्य संयोगवचनतयैतस्यशब्दश्लेषमात्रत्वाच्च। नच स्पर्शस्याऽपाकजत्वे कोमलद्रव्ये पाकेन काठिन्यं न स्यादिति वाच्यम्। काठिन्यकोमलत्वयोः संयोगविशेषत्वात्। अन्यथा चाक्षुषत्वायोगात्। एतच्च लीलावत्यादौ स्फुटम्। अतएव करकादौ



काठिन्योपलम्भोऽपि सर्वसिद्ध एवेति।

एवं द्वित्वादेरपेक्षाबुद्धिजन्यत्वाऽभिधानमपि न युक्तिसहम्। तस्यास्तद्व्यञ्जकतयाऽप्युपपत्तावेकत्ववैलक्षण्ये बीजाऽभावात्। अनेकद्वित्वाद्युत्पत्तौ गौरवाच्च। अन्यथा ह्रस्वत्वदीर्घत्वादेरप्यवधिज्ञानं जनकमेवेति वदन्तं कः समादध्यात्। किं बहुना, अङ्गसङ्गिसलिलशैत्याऽभिव्यञ्जकपवनादेरपि शैत्योत्पादकतैव स्यादिति साधु समर्थितं तन्त्ररहस्यम्।

एवं द्रवत्वस्य तेजोवृत्तित्वमपि निष्प्रमाणम्। ननु ध्मायमाने कनकेऽत्यन्ताऽनलसंयोगे सत्यपि पीतरूपद्रवत्वयोरनुच्छितिर्दृश्यते, सा चाऽसति विरोधिद्रवद्द्रव्यसम्बन्धेऽनुपपन्ना, पार्थिवद्रव्येऽत्यन्तानलसंयोगे रूपाऽऽदिपरावृत्तेरावश्यकत्वात्। तच्चविरो-धिद्रव्यं, सांसिद्धिकद्रवत्वशून्यत्वे सति रूपवत्त्वात् तेज एवेति सिद्धम्। द्रवत्वस्य तेजो-वृत्तित्वमिति चेन्न। तेजसो रूपपरावृत्तिप्रतिबन्धकत्वे घटेऽपि पाकेन रूपपरावृत्तिर्न स्यात्। तेजोविशेषः प्रतिबन्धको न सर्वं तेज इति चेन्न। पार्थिवविशेषस्यैव प्रतिबन्धकत्वोपपत्तौ तत्र तेजोऽन्तरकल्पने, तस्य नैमित्तिकद्रवत्वादिकल्पने च प्रमाणाऽभावात् नैमित्तिकद्रवत्वस्य पृथिवीत्वव्याप्यत्वाच्चेति।

एवं पारिमाण्डल्यं क्वाऽपि कारणं नेत्यपि न। वायौ रूपाऽत्यन्ताभावस्येव तस्मिन्नपि महत्त्वाऽत्यन्ताऽभावस्य प्रत्यक्षत्वेन तत्र प्रत्यक्षे प्रत्यासत्तिविधया तस्य हेतुत्वात्।

एवं घटपटोभयनिरूपितसंयोगस्यैकत्वमप्ययुक्तम्। अन्योन्याऽभावस्येव तद्भेदस्यैवोचितत्वात्। 'सम्बन्धिताऽवच्छेदकभेदेन ससम्बन्धिकपदार्थो भिद्यते' इति परेणाऽभ्युपगमात्। न चाऽऽश्रयकर्मत्वेन कारणत्वे श्येनकर्मणा वृक्षे संयोगस्य प्रतियोगिकर्मत्वेन कारणत्वे वृक्षनिरूपितसंयोगस्य श्येनेऽनुपपत्तेर्निरूपककर्मत्वेनैव कारणत्त्वादुभयनिरूपितः संयोग एक एवेति वाच्यम्, कर्मत्वेन सामान्यकारणता तत्त्वेन विशेषकारणतेत्यभ्युपगमे बाधकाऽभावात्।

एवं संयोगजसंयोगोऽप्यप्रमाणकः। युगपदुभयत्राऽपि संयोगोत्पत्तिसंभवेन तादृशप्रणाल्यां बीजाऽभावात्। नचाऽभिनवोत्पन्ननिष्क्रियघटादौ संयोगजसंयोग आवश्यकः; तेन विना 'घटो भूतलसंयुक्तः' इति प्रतीत्यनुपपत्तिरिति वाच्यम्। परम्परासम्बन्ध्यवयवसंयोगेनाऽपि रूपादौ सङ्ख्यादिप्रत्ययवत्तदुपपत्तेः। अन्यथा संयोगे कर्मजन्यतावच्छेदिका एका जातिः, संयोगजन्यताऽवच्छेदिकाऽपरेति जातिद्वयकल्पनागौरवात्। एवं विभागज-

विभागोऽपि।

एवं चित्ररूपस्य रूपान्तरस्वीकारोऽपि निष्प्रमाणकः, नानारूपसमाहारस्यैव चित्ररूपत्वात्। न च व्याप्यवृत्तिजातीयस्याऽव्याप्यवृत्तित्वं विरूद्धम्। गुणत्वादिना व्याप्यवृत्तिजातीयस्याऽपि संयोगसुखादेरव्याप्यवृत्तिताऽ-भ्युपगमवदवान्तरजात्या व्याप्यवृत्तिजातीयस्याऽपि ज्ञानादेस्तदभ्युपगमव-च्चैतस्याऽपि प्रमाणबलादव्याप्यवृत्ति-ताऽभ्युपगमे बाधकाऽभावात्। न च रूपस्याऽन्यत्राव्याप्यवृत्तित्वं न दृष्टमिति वाच्यम्, अन्यत्राऽदर्शनेऽप्यत्रैव प्रमाणबलेनाऽभ्युपगमे बाधकाऽभावात्। अन्यथा, अन्यत्राऽदृष्टं शुक्लभास्वरं तेजसि, सांसिद्धिकद्रवत्वं जले, इत्यादि न सिद्ध्येत्।

किं चैवं चित्ररूपवच्चित्रं ज्ञानमपि किं नाङ्गीकुरुषे, अनेकेन्द्रियजन्ये प्रमाणद्वयजन्ये च ज्ञाने चाक्षुषत्वाद्ययोगात्। एवं चित्रो गन्धः, चित्रो रसः, इत्याद्यपि सिद्ध्येत्। चित्ररसाहरीतकीत्यादिव्यवहारात्। तत्राऽऽश्रयोपा-धिकश्चेत्तुल्यम्प्रकृतेऽपि। तस्मात् –

**लज्जादेर्ज्ञानतो भेदात् पृथक्त्वादेरभावतः।।**
**गुणेयत्ताऽद्युपन्यासः केवलं शिष्यबन्धनम्।।५।।**

तस्माच्चतुर्विंशतिगुणा इत्याद्ययुक्तम्।

एवं कर्माणि पञ्चेत्यपि न युक्तिमत्। भ्रमणरेचनादेरप्यधिकस्य सत्त्वात्। तस्य गमनविशेषत्वे उत्क्षेपणादिकमपि गमनविशेषएवाऽस्तु। न चाऽऽकुञ्चनादौ गमनव्यवहाराऽभावात्तद्भेदः, भ्रमणादेरपि ततो भेदाऽऽपत्तेः। व्यवहाराऽभावस्य तुल्यत्वात्। तस्मात् –

**भ्रमणं गतिभेदश्चेद्वदाऽवक्षेपणेन किम्।**
**अपराद्धमतः सर्वे त्वत्सिद्धान्ताः कुयुक्तिकाः।।६।।**

एवं कर्मणो व्याप्यवृत्तित्वनियमोऽप्यप्रामाणिकः, एकदेशे पटश्चलतीति प्रतीतेः। न चाऽसाववयवगतं कर्मैव विषयीकरोति, न पटगतमिति वाच्यम्, पटत्वसामानाधिकरण्येन कर्मणो विषयीकरणात्। अन्यथा वृक्षादौ संयोगोऽपि न सिद्ध्येत्। 'वृक्षः संयुक्तः' इति प्रतीतेरवयवसंयोगेनाऽप्युपपादयितुं शक्यत्वात्। तस्मात्संयोगव-त्कर्माऽप्यव्याप्यवृत्त्येवेति।

एवं सामान्यपदार्थोऽपि न सप्रमाणकः। न चाऽनुगतप्रतीत्या घटत्वाऽऽदिसामान्यसिद्धिः, प्रतीतेरनुगतत्वमेकत्वविषयत्वं चेत्तदसिद्धमेव।



व्यक्त्यैक्यं चेद् 'घट-पटस्तम्भाः' इति समूहाऽऽलम्बनात् त्रिष्वेकसामान्य-सिद्ध्यापत्तिः। तच्च घटत्वादेर्व्यापकं, पृथिवीत्वादेर्व्याप्यमित्यभ्युपगमे परापरभावस्याऽऽप्युपपत्तेः। प्रतियोगित्वाऽनुयो-गित्वाद्यनुगतबुद्धौ व्यभिचाराच्च न तस्या जातिसाधकत्वम्। नाऽपि कारणतावच्छेद-कत्वादिना जातिसिद्धिः, कारणत्वादेस्तत्तत्स्वरूपत्वपर्यवसानेन तत्राऽनुगतावच्छेदकाऽनपेक्षणात्। नाऽपि पदशक्यतावच्छेदकत्वेन, तथात्वेऽदृष्टपदशक्यतावच्छेदकत्वेनादृष्टत्वस्याऽपि जातित्वाऽऽपत्तेः। तच्चाऽसम्मतम्परस्य। न चाऽनुगतजात्यनङ्गीकारेऽपूर्वघटादौ शक्तिग्रहाऽभावात्तद्बोधाऽनुपपत्तिः, 'प्रतियोगि इदम्' इत्यादिपदादि-वत्तदुपपत्तेरिति।

एवं जातिसङ्करस्य दूषकताऽभ्युपगमोऽपि दुराग्रहमूलकः, उपाधिसङ्करतुल्यत्वात्तस्य। न चैवमश्वत्वेन गोत्वाऽभावानुमानं न स्यात्, तयोरपि सङ्करसम्भवा-दिति वाच्यम्। उपाध्योः साङ्कर्ये शरीरत्वेनेन्द्रिय-त्वाऽभावाऽनुमानं न स्यादित्यपि तुल्यत्वाच्च। तस्मान्न सामान्यपदार्थादौ प्रमाणम्।

एवं च विशेषपदार्थाऽभ्युपगमोऽपि मुधा। न च तदभावे समानगुण-क्रियेषु परमाणुषु व्यावृत्ति बुद्धिर्न स्यादिति वाच्यम्, तेषामपि व्यावृत्त्यर्थं पदार्थान्तराऽभ्युपगमाऽऽपत्तेः। न च ते स्वत एव व्यावृत्ताः स्वरूपविशेषादेवेति वाच्यम्। परमाणुष्वेव तादृशस्वरूपाऽभ्युपगमेन व्यावृत्तिसिद्धेः किमेतैः। तस्मात्-

**विशेषाणां स्वरूपेण व्यावृत्तत्वं यथेष्यते।**
**तथैव नित्यद्रव्येषु व्यावृत्तत्वं विनैव तैः।।७।।**

एवं समवायाऽभ्युपगमोऽपि वृथैव। तेन विनाऽपि क्लृप्तैर्गुणगुण्यादिस्वरूपैरेव विशिष्टबुद्ध्युपपत्तेः। न चैकस्य विशिष्टधीनियामकत्वे लाघवमिति तदभ्युपगमः, तथात्वेऽभावविशिष्टधीनियमामकत्वेन वैशिष्ट्याऽऽ-ख्यपदार्थान्तराऽभ्युपगमाऽऽपत्तेः। न च वैशिष्ट्यस्यैक्याद् घटवति तदभावबुद्धेः प्रमात्वाऽऽपत्तिः। स्वरूपस्येव वैशिष्ट्य-स्याऽपि तदानीं तत्र सम्बन्धत्वाऽ-भावात्। यदि च क्लृप्तरूपैरेवोपपत्तेर्नातिरिक्तवैशिष्ट्याऽभ्युपगमः, तर्हि समं समवायेऽपि। किञ्च समवायाऽभ्युपगमे आत्मनि रूपं, घटे दुःखं, उष्ट्रे गोत्वं इत्यादि स्यात्, तत्तत्समवायस्य तत्र सत्त्वात्। न च समवायमात्रं तिष्ठति न तु ते पदार्था इति वाच्यम्, तेषां स्थितिनियामकसम्बन्धे सति तदभावायोगात्। न च तेष्वधिकरणेषु स्थितिनियामकत्वं न तस्येति वाच्यम्, स्वरूपस-

म्बन्धरूपनियामकत्वस्य स्वरूपादनतिरिक्तत्वेन तस्याऽपि सत्त्वात्। अन्यथा नित्यपदार्थेषु विशेषनिरूपितः समवायोऽस्ति, न तु विशेषा इत्यपि स्यात्। 'घटे रूपम्' इतिवत्तेषामननुभवात्। न च तेऽपि योगिभिरनुभूयन्त एवेति वाच्यम्। योगिनां तदनुभवे प्रमाणाऽभावात्। सत्त्वे वा त एव सशपथं पृच्छ्यन्तां, किमेतेऽपि तैरनुभूयन्ते न वेति। न च विशेषाणां तत्रावृत्तौ व्यावृत्त्यनुपपत्तिः, तन्निरूपितसमवायेनाऽपि तदुपपत्तेः। तस्मात् -

**विशिष्टबुद्धेः क्लृप्तेन स्वरूपेणैव सम्भवात्।**
**समवायाऽभ्युपगमः परस्याऽयमहो मुधा॥८॥**

एवमभावपदार्थाऽभ्युपगमोऽपि निर्मूलः। तथाहि - यथैकेनैव घटस्वरूपेणायम्प्रतियोगी, अनुयोगी, विशेष्यो, विशेषणं, उद्देश्यो, विधेयो, देवदत्तीयो, यज्ञदत्तीय इत्यादि व्यवहाराः परैर्निर्वाह्यन्ते, तथैवाऽभावव्यवहारोऽ-प्यधिकरणस्वरूपेणैव तत्तदधिकरणनिष्ठैः पदार्थैर्वा निर्वाह्यताम्। तत्तद्देशकालाऽवच्छेदेन विद्यमानेषु तत्तत्प्रतियोगिकत्वमात्रकल्पने लाघवात् किम्पदार्थाऽन्तरेण। न चाऽधिकरणस्यैवाऽभावत्वे घटकालेऽप्यभावप्रतीतेः प्रमात्वाऽऽपत्तिः। अतिरिक्ताऽभावाऽभ्युपगमेऽपि तुल्यत्वात्। अत्यन्ताऽभावस्य त्रैकालिकत्वेन निष्क्रियत्वेन च घटवत्यपि तस्य सत्त्वात्।

न च तदानीमधिकरणत्वेन संमतस्य सम्बन्धो नाऽस्तीति वाच्यम्, त्वदभ्युपगतस्वरूपसम्बन्धस्य स्वरूपात्मकस्य तदानीमपि सत्त्वात्। न च प्रतियोगिदेशाऽन्य-देशत्वं सम्बन्धः, तस्य स्वरूपादतिरेके क्लृप्तपदा-र्थाऽनन्तऽर्भावात्, अनतिरेके चोक्तदोषात्। किञ्च यत्किञ्चित् प्रतियोगिदेशाऽन्यदेशत्वस्य घटवत्यपि सत्त्वात्तत्राऽपि तदत्यन्ताऽसावाऽऽपत्तिः। स्वप्रतियोगिदेशाऽन्यदेशत्वं चाऽऽकाशाऽत्यन्ताऽभावादावप्रसिद्धम्। वस्तुतस्तु प्रतियोगिदेशाऽन्यदेशत्वस्य सम्बन्धत्वे घटवति तदत्यन्ताऽ-भावबोधोऽपि प्रमा स्यात्, सम्बन्धस्य मत्त्वात्। तत्र प्रतियोगिदेशान्यदेशत्वं नास्तीतिचेन्न। अन्येऽन्याभावस्यापि सत्त्वात्। तथाऽप्यन्योऽन्याऽभावसम्बन्धोऽस्मिन्न-धिकरणे नास्तीति चेन्न। अन्योऽन्याभावसम्बन्धो हि प्रतियोगितावच्छेदकदेशाऽन्यदे-शत्वं, तदपि तिष्ठत्येव। नत्वत्राऽप्यन्योऽन्याभावः प्रविष्टः, तत्सम्बन्धो नास्तीति चेन्न। तत्सम्बन्धो हि तत्प्रतियोगिताऽवच्छेदकदेशाऽन्यदेशत्वं, तदपि तिष्ठत्येव। एवमुत्तरोत्तरमपीति तद्वति तदभावबुद्धेः प्रामाण्यं दुष्परिहरम्। एतेन विषयाऽनवस्था दोषायैव न, ज्ञप्तिप्रतिबन्धिकाऽनवस्था नास्त्येव, वक्ताऽवच्छेदकस्य





प्रत्ययाऽविषय-त्वादिति निरस्तम्। घटवति तदभावबुद्धेः प्रमात्वस्यैवाऽऽ-पाद्यमानत्वादिति। किञ्चैवं घटाऽपसारणाऽनन्तरं तदधिकरणं घटाऽन्ताभाववन्न स्यात्। त्वन्मतेऽन्योन्याऽभावस्य व्याप्यवृत्तित्वेन तस्मिंस्तदन्योऽन्याभावाभावेन तस्याऽधिकरणस्याऽभावेन समं सम्बन्धाऽभावात्। न च स्वरूपात्मकोऽपि फलबलकल्प्यः स्वरूपसम्बन्धस्तदानीं नास्तीति वाच्यम्। अतिरिक्ताभाषाऽ-नभ्युपगमेऽप्येतादृशसमाधाने दुर्भिक्षाऽभावात्। न चाऽननुगतैरधिकरणस्वरूपै-रनुगताऽभावप्रतीत्यनुपपत्तिः। अननुगतस्वरूपैरुद्देश्यत्ववि-धेयत्वाऽऽद्यनुगत-बुद्धेरिवास्यापि सम्भवात् प्रतीतेरनुगतत्वस्य निर्वक्तुमशक्यत्वाच्च। घटो पटाऽन्योन्याभावो न, पटो घटाऽन्योऽन्याऽभावो नेत्याद्यनुगतबुद्धावनुगत-विषयत्वस्य परेणाऽप्यनभ्युपगमाच्च। अन्योऽन्याभावस्य तत्तद्भावस्वरूपताऽ-भ्युपगमात्।

किञ्चास्तु नामाऽभावः, तथापि तच्चातुर्विध्ये प्रमाणाभावः। तथाहि - समयविशेषसंसर्ग्यत्यन्ताऽभावेनैव, सर्वव्यवहारोपपत्तौ किं प्रागभावध्वंसाभ्याम्। न च प्रागभावाऽभावे भविष्यतीति प्रतीत्यनुपपत्तिः, तस्या उत्पत्तेर्भविष्य-त्कालसम्बन्धाऽवगाहितया प्रागभावाऽविषयत्वात्। किञ्च यथा प्रागभाव एव कदाचित् कपालेषु घटो नास्तीति, कदाचिद् घटो भविष्यतीति प्रतीयते। यथा वा ध्वंस एव कदाचिद् घटो ध्वस्त इति, कदाचिद् घटो नास्तीति। एवमत्यन्ताभाव एव कदाचिद् भविष्यतीति, कदाचिन्नास्तीति, कदाचिद् ध्वस्त इति प्रतीतेर्विषयोऽस्तु। एवं भूतले घटो ध्वस्त इति प्रतीतिरपि संगच्छते। न चैकस्य कालभेदेन विचित्रप्रतीतिनिर्वाहकताऽनुपपत्तिः, तथात्वे वा घटोत्पत्तेः पूर्वमपि घटो ध्वस्त इति प्रतीत्यापत्तिरिति वाच्यम्, यथा स्वरूपाऽऽत्मिकाऽपि 'दण्डी देवदत्तः' इति बोधे दण्डस्य विशेषणतैव न विशेष्यता, 'देवदत्ते दण्डः' इति बोधे दण्डस्य विधेयतैव नोद्देश्यता निर्वाह्यते दण्डस्वरूपेण, तथै-वाऽत्राऽप्यभ्युपगमे बाधकाऽभावात्। अस्तु वा ध्वस्त इति विलक्षणप्रतीत्यनुरोधेन ध्वंसः, प्रागभावस्तु निष्प्रमाण एव। यत्तु प्रागभावाऽनभ्युपगमे उत्पन्नोऽप्युत्पद्येतेति, तन्न। उत्पन्नस्यैव प्रतिबन्धकत्वात्। त्वन्मत्तेऽपि देवदत्ते श्वोभाविघटज्ञानस्याऽहमिति-ज्ञानस्य चेदानीमेवोत्पत्त्याऽऽपत्तेस्तुल्यत्वाच्च। तत्र प्रागभावस्याऽपि सत्त्वात् कालविशेषोऽपि तत्राऽपेक्ष्यत इति चेत्, तर्हि तदभावादुत्पन्नस्याऽनुत्पत्तौ किं प्रागभावेन। न चैवं कालमात्रस्य कारणताऽऽपत्तिः, एककालोत्पन्नकार्यवैचित्र्यार्थं कारणान्तरस्याऽऽवश्यकत्वात्। सामग्रीभेदं विना कार्यभेदाऽयोगात्।

एवमन्योऽन्याभावोऽपि नाऽतिरिक्त आवश्यकः घटत्वाद्यत्यन्ताऽभावेनैव 'घटो न' इत्यादिप्रतीतेर्निर्वाहात्। न च घटत्वाऽत्यन्ताऽभावज्ञाने घटत्वज्ञानं कारणं, तच्च घटाऽन्यावृत्तित्वादिगर्भमित्यात्माश्रयापत्तिरिति वाच्यम्, 'घटः' इति प्रतीतिप्रकारत्वादेरेव घटत्वत्वेनाऽऽत्माश्रयाद्यनवकाशात्। वस्तुतस्तु फलीभूते बोधे प्रतियोगिदिशि यो धर्मः प्रकारतया भासते, तत्प्रकारकं प्रतियोगिज्ञानमभावज्ञाने कारणमिति घटत्वप्रकारकघटबुद्धौ सत्यां तदत्यन्ताऽ-भावबोधो निष्प्रत्यूहः। निष्कर्षस्तु-स एवाऽभावो यदा घटत्वाऽवच्छिन्न-घटप्रतियोगिकत्वेन प्रतीयते, तदा भूतलं घटो नेति प्रतीतेरुल्लेखः, यदा घटत्वत्वाऽवच्छिन्नघटत्वप्रतियोगिकत्वेनाऽनुभूयते तदा भूतले घटत्वं नास्तीत्युल्लेख इति नाऽन्योन्याऽऽश्रयादिलेशोऽपीति न काऽप्यनुपपत्तिः।

**तस्मात् स्वरूपसम्बन्धैः सर्वप्रत्ययसम्भवे।**
**भावाद्भिलक्षणाऽभावस्वीकारो भ्रममूलकः ॥९॥**

एवं योग्याऽनुपलब्धिरप्यभावग्राहिकेत्यपि मन्दम्। प्रमेयत्वादिग्रहे व्यभिचारेण भावग्रहेऽभावानुपलब्धेरिवाऽभावग्रहेऽपि भावानुपलब्धेरहेतुत्वात्। न चैवं घटप्रत्ययाऽनन्तरमपि तत्र तदभावग्रहः स्यादिति वाच्यम्, किं भ्रम आपाद्यते, उत प्रमा? आद्ये दोषाऽभावादित्युत्तरम्, अन्त्ये विषयाऽभावादिति। न च पाषाणे घटभ्रमदशायां तदभा-वप्रमाऽऽपत्तिः, तत्र भ्रमजनकदोषस्यैव प्रतिबन्धत्वात् गुणाऽभावाद्वा तदभावोपपत्तेः। अन्यथा भ्रमपूर्वक्षणे घटाऽभावग्रहः किमिति न भवेत्। किञ्चाऽनुपलब्धे योग्यत्वं, तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्, एवञ्च स्तम्भे यदि पिशाचत्वं स्यात् तर्हि योग्यव्यक्तिवृत्ति स्यात् तथा चोपलभ्येतेतिवत् परमाणुर्यदि महान् सन् भूतलवृत्तिः स्यात् तर्ह्युपलभ्येतेत्या-द्यापादनसम्भवेनाऽभावे योग्यायोग्यविभागो न स्यात्। यत्किञ्चिद्विशेषणप्रक्षेपेण सर्वत्रैतादृशाऽऽपादनसम्भवात्। तस्मान्न किञ्चिदेतत्।

एवं द्रव्यादिपदार्थेषु खण्डितेषु तद्घटितानि सर्वाणि निर्वचनानि खण्डितप्रा-याण्येव। किं च परोक्तानि सर्वाणि लक्षणानि कालकालोपा-धिदिग्दिगुपाधिष्वतिव्या-प्तानि। यत्तु स्वरूपसम्बन्धविशेषेण तत्र तानि न सन्तीति, तन्न। स्वरूपसम्बन्धस्य स्वरूपाऽऽत्मकतया तस्याऽपि सत्त्वात्। अतिरिक्तत्वे वा सोऽप्यस्त्येव कालादेः सर्वाऽऽधारत्वादप[illegible] क्लृप्तपदार्थेषु तस्याऽनन्तर्भावात्। दृष्टान्ताऽऽदौ तदन्त-र्भावे वा एकएव



पदार्थोऽस्तु, किं षोडशपदार्थाऽऽदिपरिकल्पनया। किञ्च स्वरूपस्य सम्बन्धत्वे सर्वाऽपि प्रतीतिः प्रमा स्यात्, शुक्तावपि स्वरूपसम्बन्धेन रजतत्वादेः सत्त्वात्। न चैवं नेदं रजतमिति बाधाऽनुपपत्तिः, परम्परासम्बन्धेन रक्तरूपवत्यपि स्फटिके नाऽयं लोहित इतिवत् समवायसम्बन्धेन रजतत्वाऽभावान्नेदं रजतमिति बाधोपपत्तेः। तस्मात् –

**जगदाधारता त्याज्या कालादीनां त्वयाऽथवा।**
**कार्या वेदान्तसिद्धान्तपादसेवा गतत्रपम् ॥१०॥**

अनयैव दिशा भाट्टाद्यभिमताः पदार्था अपि निरस्तावेदितव्याः। नन्वेवं पदार्थखण्डने त्वत्सिद्धान्ता अप्युच्छिद्येरन्निति चेन्न। अस्माकमेता-दृशप्रक्रियायानाग्रहाऽभावात्। तदुक्तं सुरेश्वराऽऽचार्यैः – ''यया यया भवेत् पुंसे व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रिया ज्ञेया साध्वी सा चाऽनवस्थिता'' इति। तथा नृसिंहाऽऽश्रमगुरुचरणैरप्युक्तम्, 'युष्माभिरेव निपुणैः सुविधार्य एष येषां महाकृतिरियं व्यवहाररक्षा। अस्माकमद्य निजरूपमभीप्सतां किं स्वप्नोपमव्यवहृतेः परिरक्षणेन' इति। अन्यैरप्यभियुक्तैरभिहितम्, ''प्राचीनैर्व्यव-हारसिद्धविषयेष्वात्मैक्यसिद्धौ परं, सन्नह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः'' इति। किन्तु श्रुतिस्मृत्यनुरोधेनैवाऽस्माकं पदार्थाऽभ्युपगमः, केवलं कुतर्केण पदार्थनिर्णयाऽयोगात्, वेदैकगम्यब्रह्माऽऽदिनिर्णयस्य तु सुतरामयोगात्। तदुक्तं महाभारते आरण्यके पर्वणि – ''शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम्। एकाक्षराभिसम्बद्धतत्त्वं हेतुभिरिच्छसि। बुद्धिर्न तस्य सिद्ध्येत साधनस्य विपर्ययात्'' इति। तस्माच्छ्रुत्याद्यनुरोधनैव पदार्था अभ्युपेयाः।

तथाहि – आत्मा देहाऽतिरिक्तः ''न जायते म्रियते वा विपश्चिन्नाऽयं कुत-श्चिन्न बभूव कश्चित्! अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे'' इति श्रुतेः। ''विलक्षणः स्थूलसूक्ष्मात् देहादात्मेक्षिता स्वदृक्। यथाऽग्निर्दारुणो दाह्यात् दाहकोऽन्यः प्रकाशकः'' इति स्मृतेश्च। देहाऽतिरिक्ताऽऽत्माऽनभ्युपगमे महापुरुषेषूपलभ्यमाना जातिस्मृतिरनुपपन्ना, अननुभूते स्मृत्ययोगात्। एवं परशरीरं प्रविश्य ब्रह्मराक्षसादीनां गयापिण्डदानादिप्रार्थनाऽप्यनुपपन्ना, एवं नामभ्रमेण यमभटैर्नीतानां पुनरावृत्तिः, तत्रत्यवार्ताकथनादिकमप्यनुपपन्नम्। न चेदं सर्वं प्रमाः, प्रमात्वे बाधकाऽ-भावात्। धियां प्रामाण्यस्यौत्सर्गिकत्वात्, गयापिण्डदानाऽनन्तरं ब्रह्मराक्षसकृतपीडाया निवृत्तिदर्शनाच्च। देहस्यैवात्मत्वे कृतहानाऽकृताऽ-

भ्यागमश्च। तस्मात् -

**श्रीवासुदेवभक्तानां दृश्यते प्राग्भवस्मृतिः।**
**साऽन्यथा नैव घटते तस्मादात्मा तनोः पृथक्॥११॥**

स च स्वप्रकाशज्ञानस्वरूपः ''अत्राऽयं पुरुषः स्वयंज्योतिः'' इति श्रुतेः; ''आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरपावृतः। अग्निवद् दारुवद् देहः कस्येहा कस्य संस्मृतिः'' इति स्मृतेश्च। आत्मनः स्वप्रकाशज्ञान-स्वरूपत्वाऽनभ्युपगमे घटोऽयं घटोऽयमिति धारावाहिकज्ञानाऽनन्तरमाप्रहरं घटमेवाऽहमनुभवन्नासमिति सार्वजनीनं स्मरणं न सङ्गच्छेत, अननुभूते स्मृत्ययोगात्। मध्ये चाऽनुव्यवसायाऽभ्युपगमे धाराविच्छेदाऽऽपत्तेः नाऽन्यदवेदिषमिति स्मृतिबाधश्च।

यत्तु नेदं स्मरणं, किन्तु तद्गोचराऽनुमितिरिति, तन्न। लिङ्गाऽभावेनाऽनुमित्ययोगात्। तथाहि - न तावदर्थव्यवहारो लिङ्गं, व्यवहाराज्ञानेऽपि पूर्वोक्ताऽनुसन्धानदर्शनात्। व्यवहारेण ज्ञानमात्रसिद्धावपि तस्मिन् प्रहरसम्बन्धस्य चाक्षुषत्वाऽऽदिविशेषस्य च सिद्ध्ययोगाच्च। न च प्रहरत्वं पक्षतावच्छेदकं कृत्वा एतत्प्रहराऽवच्छिन्नोऽहं घटज्ञानवान् घटव्यवहर्तृत्वादिति साध्यमाने पक्षताऽवच्छेद-काऽवच्छेदेन साध्यसिद्धेः प्रहराऽवच्छिन्न-ज्ञानसिद्धिरिति वाच्यम्, तावताऽपि चाक्षुवत्वाऽऽदिविशेषस्य ज्ञानेऽसिद्धेस्तेन विनाऽद्राक्षमस्प्राक्षमित्याद्यनुभवाऽयोगात्। यथाकथंचित् ज्ञानाऽनुमानेऽपि तदाऽन्यन्नाऽवेदिषमितीतरविषयकथानाभावप्रतीत्यनुप-पत्तिः सुदृढैव। न च घटज्ञानेनैव तदानीन्तनेतरज्ञानाऽभावाऽनुमा, युगपदनेकविषयकज्ञानसम्भवेनैक-ज्ञानस्येतरज्ञानाऽभावेन समं व्याप्त्यभावेनाऽनुमित्ययोगात्। तस्मात् स्वप्रकाशाऽ-त्मस्वरूपज्ञानेनैव घटपटाद्याकारवृत्तयस्तदभावाश्च भास्यन्त इति तद्बलादेव धारानुसन्धानम्।

एवं स्वाप्नपदार्थज्ञानमपि स्वप्रकाशसाक्ष्येव, तदन्यज्ञानस्य तत्राऽसम्भवात्। न च स्मृतिरूपं तत्, देशविशेषवैशिष्ट्यस्य पूर्वमननुभूतस्य स्मरणाऽसम्भवात्। नन्वदृष्टविशेषाद्विशकलितपदार्थोपस्थितौ सत्त्यामेव स्मृतिं प्रत्यासत्तीकृत्य मनसा तावद्विषयकं विशिष्टज्ञानमुत्पाद्यत इति किं साक्षिणेति चेन्न। ज्ञानस्य प्रत्यासत्तित्वेऽनुमानादिप्रामा-ण्योच्छेदापत्तेः। तथाहि - वह्निना साकं ज्ञानलक्षणप्रत्यासत्तेः सत्त्वात् पर्वतेऽपि किमिति वह्निप्रत्यक्षमेव न भवेत्।





समाने विषये प्रत्यक्षसामग्र्या अनुमितिसामग्रीतो बलवत्त्वात्। न चाऽलौकिकप्रत्यक्षसामग्र्यपेक्षयाऽनुमितिसामग्री प्रबलेति तस्या एवोत्पत्तिरिति वाच्यम्, तथा सति भ्रमरूपविशेषदर्शनाऽनन्तरं भ्रमरूपं पुरुषप्रत्यक्षं न स्यात् तस्याऽलौकिकत्वात्। न च प्रमाऽनुमितिसामग्री बलवती, भ्रमरूपविशेषदर्शन-स्थले च सा नास्तीति वाच्यम्, भ्रमाऽनुमित्युच्छेदप्रसङ्गात्। न च क्वचित् किञ्चित् प्रबलं, न तु तत्र नियामकविशेषोऽस्तीति वाच्यम्, तर्हि पर्वतेऽपि वह्निप्रत्यक्षमेवाऽस्तु, किमनुमित्या। नन्वेवं प्रर्वते वह्निमनुमिनोमीत्यनुव्यवसायो न स्यात्, तत्राऽनुमितित्वाऽभावादिति चेन्न। अनुमितित्वशाब्दत्वाऽऽदिकं प्रत्यक्षत्वव्याप्यं जात्यन्तरमित्यभ्युपगमेनाऽपि तादृशानुव्यवसायोपपत्तेः। तस्मात् ज्ञानलक्षणप्रत्यासत्त्यभ्युपगमे चार्वाकमतप्रवेशः स्फुट एवेति, न ज्ञानं प्रत्यासत्तिः। नन्वेवं कथं सुरभिचन्दनमिति चाक्षुषज्ञानं, सौरभांऽशे प्रत्यासत्त्यभावात्, त्वया ज्ञानस्य प्रत्यासत्तिताऽनभ्युपगमादिति चेन्न। तत्र चन्दनत्वेन सौरभस्याऽनुमानात् क्वचित् स्मरणाच्च प्रत्यभिज्ञाऽपि, तत्रांऽशे स्मृतिरेवेति न तदनुरोधेनाऽपि ज्ञानं प्रत्यासत्तिः। नन्वेवं कथं कविकाव्यमूलभूतं ज्ञानं, तस्य स्मृतित्वाऽभावात् तद्विषये प्रमाणान्तरस्य चाऽप्रसरादितिचेन्न। तस्य शाब्दबोध-त्वात्। तथाहि - त्वन्मन्ते पदार्थेष्विव दैववशात् पदेषु स्मृतेषु सत्सु तैरेव शाब्दबोधः, पदविशेषजन्यपदार्थोपस्थितेरेव शाब्दबोधसामग्रीत्वात्। तात्पर्यादिज्ञानस्य च शाब्दबो-धाऽकारणत्वात्। एतश्चार्ये निरूपयिष्यते। तस्मात् स्वाप्नपदार्थ-साधकः साक्ष्येवेति सिद्धम्।

ते च स्वाप्नपदार्था अन्तःकरणोपहितसाक्षिण्युत्पद्यन्ते। तथा च श्रुतिः ''न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'' इति। अनुपहिते चाऽध्यासे साक्षिसम्बन्धाऽभावाद्भानाऽनुपपत्तिः। ते च पदार्था मूलाऽज्ञानपरिणामाः, तदन्यस्योपादानत्वे प्रमाणाऽभावात्। ते चाऽविद्याऽ-तिरिक्तनिद्राऽऽदिदोषजन्यत्वात् प्रातिभासिकाः, जाग्रद्बाधेन तेषां प्रविलयमात्रम्, तदुपादानाऽज्ञानस्य तेन विनाऽनिवृत्तेः।

यत्तु स्वप्नसृष्टिः पारमार्थिकीति, तन्न, ''स्वप्ने स जीवः सुखदुःखभोक्ता स्वमापया कल्पितविश्वलोके'' इत्याथर्वणश्रुतिविरोधात्। तस्मात् स्वाप्नपदा-र्थभासकः स्वप्रकाशः साक्ष्येवेति सिद्धम्।

एवं सुषुप्त्यादिसाक्ष्यपि स एव। तेन विना सुखमहमस्वाप्सं, नाऽन्यत्किञ्चिदवेदिषमिति परामर्शाऽनुपपत्तेः अननुभूते स्मृत्ययोगात्। न चेदं न

स्मरणं, किंत्वनुमितिरेवेति वाच्यम्, लिङ्गाऽभावेनानुऽमित्ययोगात्। न च नयनप्रसादादिना तदनुमानं, स्वीयसुषुप्त्यादिज्ञानं विना तन्निरूपितव्याप्तिग्रह-स्यैवाऽभावेनाऽनुमित्ययोगात्। परकीय-सुषुप्तेश्च परं प्रत्यप्रत्यक्षत्वेन व्याप्तिग्रहाऽयोगात्। न च तदीयवचनात् तत्सुषुप्तिं ज्ञात्वा तत्र व्याप्तिग्रहः, तेनाऽपि स्वीयसुषुप्तेर्ज्ञातुमशक्यत्वात्। तेनाऽपि पुरुषाऽन्तराऽनुसरणेऽप्ययमेव दोषो, ऽन्धपरम्परा च। न चाऽहं पूर्वकाले सकलजन्यज्ञानोपरमवान् तद्वत्तयाऽननुसन्धानादिति सुप्तोत्थितस्य तदनुमानमिति वाच्यम्, वेद्यज्ञानवादे ज्ञानस्याऽनुसन्धाननियमाऽभावेन व्यभिचारात्। तस्मात् साक्ष्येवाऽत्र शरणम्। तदुक्तं भगवता व्यासेन, ''बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः। तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः'' इति। एवं प्रतिपुरुषं सुखदुःखाऽऽदिविषयाऽ-नन्तज्ञानकल्पने गौरवादेक एव साक्षी सर्वावभासकः स्वप्रकाश इति। तस्मात् -

**जाग्रत्स्वप्नसुषुप्त्यादिसाक्षी चैतन्यविग्रहः।**
**देहातिऽरिक्त आत्मेति श्रुतिस्मृतिविदां मतम्॥१२॥**

ननु स्वप्रकाशः साक्षीत्युक्तम्, तत्र किंतावत् स्वप्रकाशत्वं, न तावत् ज्ञानाऽविषयत्वम्, साक्षिणोऽपि वेदान्तजन्यज्ञानविषयत्वेनाऽसम्भवात्। नाऽपि चैतन्याऽविषयत्वं, साक्षिणोऽपि चैतन्यविषयत्वात्। अन्यथा तद्व्यवहारो न स्यात्। व्यवहारस्य व्यवहर्तव्यविषयकचैतन्यसाध्यत्वादिति चेत्, उच्यते - चिदविषयत्वं स्वप्रकाशत्वं, तच्च वृत्तिविषयत्वेऽप्यविरुद्धम्, न च चैतन्यविषयत्वाऽभावे तद्व्यवहाराऽनुपपत्तिः, व्यवहारत्वेन चैतन्यत्वेन च कार्यकारणभावो लाघवात्, न तु तद्विषयचैतन्यत्वेन, गौरवात्। न चैवं घटविषयकचैतन्यात् पदव्यवहाराऽऽपत्तिः, घटादिव्यवहारत्वेन तत्तद्विषयचैतन्यत्वेन च विशेषकार्यकारणभावस्याऽपि सत्त्वेन तदभावादेव तदव्यवहारात्। न चाऽऽत्मन्यपि विशेषकार्यकारणभावोऽस्त्विति वाच्यम्, स्वप्रकाशस्वरूपेणैव तदव्यवहारोपपत्तावात्मव्यवहारत्वेन तद्विषयकचैतन्यत्वेन विशेषकार्यकारणभावस्याऽ-कल्पनात्। तस्मात् चिदविषयत्वमेव स्वप्रकाशत्वम्। नन्वसम्भवादलक्षणम्, 'सुखमहं जानामि' इति सुखभासकसाक्षिणोऽपि चैतन्यविषयकत्वानुभवादिति चेन्न। स्वप्रकाश-साक्ष्यनुभवस्यैवैवमाकारत्वात्। अस्तु वै तदनुभवबलात् साऽक्षिणोऽपि कल्पितभेदेन चिद्विषयत्वम्। न चैवं स्वप्रकाशत्वाऽनिरुक्तिः,



यावत्स्वरूपमनुवर्तमानविषयत्वाऽभाववत्वस्यैव स्वप्रकाशत्वात्। तस्मान्न स्वप्रकाशत्वाऽनिरुक्तिः।

स चात्मा सुखस्वरूपः। तदुक्तं सप्तमस्कन्धेऽवधूतप्रह्लादसंवादे - ''सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः। ''मनःसंस्पर्शजान् दृष्ट्वा भोगान् स्वप्स्यामि संविशन्'' इति। अस्याऽर्थः - सुखमस्य जीवस्य स्वरूपमेव, तर्हि सर्वेषां किं न प्रयते तत्राऽऽहसर्वेति। तनोतीति तनुः, अभिव्यञ्जिका, तथा च तदभावान्न प्रयत इत्यर्थः। एवं परमप्रेमास्पदत्वादप्यात्मा सुखरूपः, न च सुखसमवायितया तस्य परमप्रेमास्पदत्वम्, न तु सुखरूपत्वादिति वाच्यम्, तथा सति दुःखसमवायितया तस्मिन् निरुपाधिद्वेषप्रसङ्गात्। एवं स्वरूपस्य सुखत्वाऽनभ्युपगमे मोक्षस्य पुरुषाऽर्थताऽपि न स्यात्, तत्र जन्यसुखासम्भवात्। न च नास्त्येव तत्र सुखं, दुःखाऽभावोद्देशेनैव मुमुक्षूणां तत्र प्रवृत्तेरिति वाच्यम्, दुःखाऽभावस्य स्वतःपुरुषार्थत्वाऽभावात् सुखशेषतयैव तस्याऽपेक्षणात्। तदुक्तमभियुक्तैः - ''गोतमाभिमतां मुक्तिं गोतमेः गन्तुमर्हति। न हि मूर्च्छाद्यवस्थासु प्रवृत्तो दृश्यते सुधीः'' इति।

एवमात्मनः सुखरूपत्वाऽभावे सुखमहमस्वाप्समिति परामर्शाऽनुपपत्तिश्च। दुःखाऽभावविषयता तस्येतिचेत्, अहो महदिदं व्याख्याकौशलं यदनुभवोऽपि व्याख्यायते। किञ्च दुःखाभावोऽपि सुषुप्तावननुभूतस्त्वन्मते स कथं पराम्रष्टव्यः, न चाऽहं सुषुप्तिकाले दुःखाभाववान्, दुःखसामग्रीविरहादिति तदनुमानमिति वाच्यम्, तदानीन्तनसामग्र्यभावस्याऽपि ज्ञातत्वाऽभावेनाऽनुमानाऽयोगात्। तस्मादात्मैव सुखरूपः।

तस्य चाऽऽत्मनः संसारोऽहङ्कारोपाधिकः ''अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम्। विद्वान् विभिद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत्'' इति स्मृतेः। न तु वास्तवः ''असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा। गतयो हेतवश्चाऽस्य मृषा स्वप्नदृशोऽथ यथा''। असत्त्वात्। सदन्यत्वात्। ''यावद् देहेन्द्रियप्राणैरात्मनः सन्निक-र्षणम्। संसारफलवांस्तावदथार्थोऽप्यविवेकिनः'' इत्यादि स्मृतेः।

नन्वात्माऽतिरिक्तः कोऽयमहङ्कारो नाम? उच्यतेदेहाऽऽदिव्यतिरिक्त-श्चिदात्मैवाऽन्तःकरणविशिष्टः सन् अहङ्कार इत्युच्यते। विशिष्टश्च स्वरूपादौपाधिकभेदेन भिन्नः, स एव प्रमाश्रयत्वात् प्रमातेति, कर्तेत्यप्युच्यते। अन्तःकरणविशिष्टस्यैवकर्तृत्वात्। ननु ''कर्तुर्मम मनः'' इति

प्रतीतेरन्तःकरणसाक्षिणः कैवलस्यैव कर्तृत्वं, न तु कर्तृकोटावन्तःकरणस्य प्रवेशः, तस्य सुखाद्युपलब्धिकरणतयैवाऽनुमानादिति चेन्न। सुखदुःखाद्युपादान-स्यान्तःकरणस्वभावत्वात्। अन्यथा दुःखादेः साक्षिणाऽपि भानोपपत्तौ तदसिद्ध्यापत्तेः। कर्तुर्मम मन इति प्रतीतिश्च कर्तुर्ममाऽऽत्मेतिवदुपपद्यते। तस्मात् दुःखादिधर्मि यदन्तःकरणं, तत्तादात्म्याऽऽपन्नएवाऽऽत्माऽहमिति प्रतीतेर्विषय इत्यात्मन औपाधिक एव प्रमातृत्वादिसंसारः। ननु दुःखादिकमात्मन एव धर्मः, अन्यथा बन्धमोक्षयोर्वैयधिकरण्याऽऽपत्तिरिति चेन्न। ''कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'' इति श्रुत्या, ''शोकहर्षभयक्रोधलोभमोहस्पृहाऽऽदयः। अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नाऽत्मनः''॥ इति स्मृत्या च दुःखाऽऽदेरन्तःकरणधर्मत्वस्यैवावगमनात्, दुःखादिधर्मकस्य चाऽन्तःकरणस्याऽऽत्मन्यध्यस्तत्वात् तत्राऽपि धर्मिविषम-सत्ताकं दुःखमस्त्येवेति न बन्धमोक्षपोर्वैयधि-करण्यम्। तस्मात् सत्यज्ञानानन्द-रूपस्याप्यात्मनोऽहङ्कारोपाधिको बन्ध इति सिद्धम्।

नन्वात्मनश्चित्स्वरूपत्वे सर्वं सर्वदा सर्वस्याऽपरोक्षतया भायात्, चैतन्यस-म्बन्धसत्त्वे सुखदुःखादिनेव घटाऽऽदिनापि चक्षुरादेरनपेक्षणादिति चेत्। उच्यते -साक्षिसम्बन्धोऽपरोक्षता न चैतन्यतासम्बन्धः, साक्षी चाऽन्तःकर-णोपहितः। तदुक्तं स्कान्दे सूतगीतायाम् - ''एकत्वेऽपि पृथक्त्वेन व्यपदेशोऽपि युज्यते। अन्तःकरणभेदेन साक्षिणः प्रत्यगात्मनः'' इति।

तथा ''चित्तवृत्त्यभिसम्बन्धद्वारेणैव दृगन्वयात्। विभान्ति न स्वतो बाह्यविषयाश्च तथैव च'' इति। तत्सम्बन्धश्च घटादेर्न चक्षुरादिकं विना घटते। तथा हि - अन्तःकरणं मध्यमपरिमाणं, तच्च चक्षुरादिसहकारेण बहिर्निःसृतं सत् बाह्यपदार्थैः सम्बध्यते। तदुक्तं श्रीवासुदेवेन - ''इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाऽम्भसि'' इति। तथा स्कान्देऽपि - ''सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु। विषये गच्छति प्राणश्चेष्टते वाग् वदत्यपि'' इति। सैवाऽन्तःकरणस्य विपुलाऽवस्थाविशेषो वृत्तिरित्युच्यते। तथा च वृत्त्याऽन्तःकरणाऽवच्छिन्नघटाऽवच्छिन्नचैतन्ययोः पूर्वं स्थितेऽन्तः-करणत्वाऽवच्छिन्नत्वाऽनवच्छिन्नत्वकृते भेदे नष्टे सति साक्षिसम्बन्धादपरोक्षतया घटादिर्भासते। नन्वेवं घटे पाषाणोऽयमिति भ्रमकालेऽपि घटोऽपरोक्षतया भायात्, साक्षिसम्बन्धस्येदमाकारवृत्त्या निष्पन्नत्वादिति चेन्न। अनावृतसाक्षि-





सम्बन्धस्याऽपरोक्षत्वात्, तत्र च घटाऽवच्छिन्नचैतन्ये आवरणस्य सत्त्वात्। ननु तर्हि तस्य कदाऽप्यपरोक्षता न स्यात्, आवरणनिवर्तकाभावादिति चेन्न। भ्रमजनकदोषनिवृत्तौ सत्यां पश्चादुत्पन्नया घटाऽऽकारवृत्त्या घटाऽवच्छिन्नचैतन्य-विषयिण्या घटाऽवच्छिन्नचैतन्यनिष्ठाऽऽवरणज्ञाननिवर्तनात्, समानाश्रयविषय-ज्ञानस्याऽज्ञाननिवर्तकत्वात्।

परोक्षस्थले तु न वृतेर्निर्गमनं, निर्गमसहकारिणश्चक्षुरादेरभावात्। अत एवापरोक्षविषयः फलव्याप्यः, परोक्षस्तु वृत्तिव्याप्य इति सिद्धान्तः। ननु तर्हि परोक्षपदार्थस्य साक्षिसम्बन्धाऽभावे कथं भानमिति चेन्न। चैतन्यसम्बन्धमात्रेण परोक्षतया भानोपपत्तेः। न चैवं सर्वदा सर्वप्रतीतिप्रसङ्गः, अज्ञानविशेषणतया भानस्येष्टत्वात्। ज्ञाततया ज्ञानाऽर्थं तदाकारवृत्तेरप्यनपेक्षणात्। वृत्तेस्तदा-कारत्वञ्च, परमते ज्ञानेच्छादेरिव तद्विषयकत्वमेव। विषयत्वं चाऽखण्ड आविद्यको धर्मः प्रतियोगित्वाऽनुयोगित्वाऽभावत्वादिवत्। तस्मान्न परोक्षतया भानार्थं वृत्तिनिर्गमनम्।

एवमुत्पत्तिदशायामेव ये साक्षिसम्बद्धा, ये वा निरन्तरसाक्षिसम्बद्धास्तेषु तदाकारवृत्तिरपि नाऽपेक्ष्यतेऽनुपयोगात्। ते च सङ्गृहीता नृसिंहाऽऽश्रमगुरुचरणैः - ''अज्ञानमन्तःकरणं च तस्य कामादयो यस्तदभाव एषः। स्वप्नेऽपि यद्यत्तदशेषमेव विना प्रमाणं निजबोधसिद्धम्'' इति। अस्यार्थः-अज्ञानादिकं तस्याऽन्तःकरणस्य कामादयो वृत्तिविशेषाः, तेषां कामादीनामभावः। स्वप्ने यद्वस्तूत्पद्यते तत्सर्वम्। उपलक्षणञ्चैतत्, स्वाप्नपदार्थानामभावः प्रातिभासिकं रजतादिकञ्च एतत्सर्वं स्वाऽऽकारवृत्तिमन्तरेणाऽपि स्वरूपबोधेनैव सिद्धमिति। एतेन ज्ञानादेरनुव्यवसायगम्यत्वं निरस्तम्। ज्ञानलक्षणप्रत्यासत्तेर्दूषितत्वेनाऽ-नुव्यवसाये घटादिभावस्याऽसम्भवेन केवलज्ञानमात्रविषयकाऽनुव्यवसायस्याऽ-नुपलम्भबाधितत्वात् एकेनैव साक्षिणा ज्ञानाऽऽदिभानोपपत्तावनन्तज्ञानकल्पने प्रमाणाऽभावाच्च। तस्मादन्तःकरणादयः केवलसाक्षिभास्या एवेति सिद्धम्।

स चाऽन्तऽकरणसाक्षी जीवात्मा परमेश्वरस्य प्रतिबिम्बः। ''यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनु गच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा'' इति श्रुतेः। ''एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः। यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च'' इति स्मृतेश्च।

ननु जीवस्य प्रतिबिम्बत्वे ब्रह्मणो भेदप्रसङ्गः, लोके ''इमौ

चैत्रतत्प्रतिबिम्बौ'' इति बिम्बप्रतिबिम्बयोर्भेदस्य निर्णयादिति चेन्न। भेदमात्राऽऽपादने तस्येष्टत्वात्, पारमार्थिकभेदापादने च दृष्टान्ताऽसिद्धेः। तत्र ग्रीवास्थ एव मुखे उपाधिसन्निधानाद्भेदारोपेण पारमार्थिकभेदवत्त्वाऽभावात्। न चैवं दर्पणे मुखमिति प्रतीत्यनुपपत्तिः, ग्रीवास्थ एव मुखे दर्पणस्थत्वस्याऽऽरोपेण तदुपपत्तेः। न च मुखेन्द्रियसन्निकर्षाभावे भेदाद्यारोपाऽनुपपत्तिः, दर्पणाऽभिघातेन परावृत्तचक्षुषा मुखग्रहणसम्भवात्। तदुक्तम् – ''दर्पणाऽभिहता दृष्टिः परावृत्य स्वमाननम्। व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्'' इति।

नन्वेवं जलादेर्दृष्ट्यभिघातकत्वे जलान्तःपातिपाषाणादिग्रहो न स्यात्, अनभिघातकत्वे च तत्र प्रतिबिम्बो न स्यादित्युभयतः पाशा रज्जुरिति चेन्न। तत्र केषांचित् चक्षुरवयवानामभिघातेऽपि केषांचित् जलमध्येऽपि प्रविष्टत्वेन तदुभयोपपत्तेः फलबलेन विरलाऽवयवे तथैवाऽभ्युपगमात्।

नन्वेवमपि शुक्तिरजतादिप्रतिबिम्बे का गतिः, तत्राऽज्ञानाऽभावेन भेदाऽऽरोपाऽयोगात्, समानसत्ताकयोर्भेदाऽभेदयोर्विरोधाच्चेति चेन्न। तत्र भेदस्य मूलाऽज्ञानकार्यत्वेनाऽवस्थाज्ञानाभावेऽप्यनुपपत्त्यभावात्। वस्तुतस्तु तत्राप्यज्ञानं तिष्ठत्येव, अन्यथा इदं द्रव्यं न वा देवदत्तीयं न वेत्यादि संशयाऽनुपपत्तेर्घटादावपि संशयस्यैवाऽज्ञानकल्पकत्वात्। न चैवं प्रातिभासिकेऽज्ञानं नास्तीति सिद्धान्त-विरोधः, रजतत्वादिप्रकारकसंशयजनकमज्ञानं नास्तीति तदर्थात्। तस्मान्न क्वाप्यनुपपत्तिः। न च समानसत्ताकयोर्भेदाऽभेदयोर्विरोधः, अनौपाधिकयोरेव तयोर्विरोधात्। अन्यथाऽऽकाशे घटमठादिप्रयुक्तभेदो व्यावहारिक इति सिद्धान्तेऽप्यगतेः। तस्मात् सोपाधिकः सर्वोऽपि भ्रमो मूलाऽज्ञानस्य तुलाऽज्ञानस्येव वा कार्यमिति न प्रातिभासिकरजतादेः प्रतिबिम्बाऽनुपपत्तिः।

नन्वेवमपि नात्मनः प्रतिबिम्बः, नीरूपस्य प्रतिबिम्बाऽसम्भवात्। अन्यथा वायोरपि प्रतिबिम्बाऽऽपत्तिरिति चेन्न। नीरूपस्यापि रूपादेर्लोके प्रतिबिम्बदर्शनात्। न च नीरूपद्रव्यस्य तदसम्भवः, आकाशे व्यभिचारात्। न चाऽऽकाशस्य न प्रतिबिम्बः, किन्त्वभ्रादेरेवेति वाच्यम्, दर्पणाऽभिहते-त्यादिन्यायेन चाक्षुषमात्रस्य प्रतिबिम्बसम्भवेनाकाशस्याऽपि प्रतिबिम्बसम्भवात्। अन्यथा प्रसृतिपरिमिते जले दूरदेशस्थतयाऽनेकचन्द्राभ्राऽऽदिप्रतीतिर्न स्यात्। न च नीरूपस्याऽऽकाशस्य चाक्षुषत्वाऽनुपपत्तिः, रूपादिवत्तदुपपत्तेः। न च द्रव्येऽयं नियमः, आत्मनि व्यभिचारात्, तस्याऽपि चक्षुर्जन्यवृत्तिविषयत्वात्, रूपादेरपि द्रव्यत्वाच्च। तस्याऽपि सङ्ख्याश्रयत्वस्य प्रागुपपादितत्वात्। न चैवं



''अप्रत्यक्षेऽपि ह्याकाशे'' इति भाष्यविरोधः, तस्याऽभ्युपगमवादपरतया मताऽन्तरपरतया वा ग्रन्थकारैर्व्याख्यातत्वात्। न चैवं वायोरपि प्रतिबिम्बाऽऽपत्तिः, विभ्रमहेतूनां विचित्रतयैतादृशशङ्काया व्यधिकरणत्वात्। अन्यथा त्वन्मते गुरुत्वादेरपि प्रतिबिम्बः किं न स्यात्, तस्याऽचाक्षुषत्वान्नेति चेत्, समं वायावपि। यत्तु जीवस्य प्रतिबिम्बत्वेऽचेतनत्वप्रसङ्गः, लोके प्रतिबिम्बानामचेतनत्वस्यैवाऽवधारणादिति, तत्तुच्छम्। जडप्रतिबिम्बस्य जडत्वेऽपि चेतनप्रतिबिम्बस्य चेतनत्वे बाधकाऽभावात्। यदपि दर्पणाऽभिहता दृष्टिरित्यादिप्रक्रिया जीवप्रतिबिम्बे न सम्भवतीति, तत्तथैव। यत्र बिम्बप्रतिबिम्बभावेन भेद उत्पद्यते तत्रेयं प्रक्रिया, यत्र त्वनादिसिद्धो बिम्बप्रतिबिम्बभावेन भेदः, तत्राऽस्या अनुपयोगात्, यथाऽस्मदादिज्ञानस्य शरीरसापेक्षत्वेऽपि नेश्वरज्ञानस्य तदपेक्षा तद्वत्। तस्मात् –

**सत्यज्ञानानन्दमूर्तिरहङ्कारेण संसरन्।**
**जीवः श्रीवासुदेवस्य प्रतिबिम्ब इति स्थितम्।।१३।।**

तत्र सत्त्वरजस्तमोगुणाऽऽत्मकमज्ञानं प्रतिबिम्बोपाधिः। ननु किमज्ञानेन, न जानामीतिप्रतीतेर्वृत्त्यभावविषयत्वेन तत्पदार्थाऽवच्छिन्नचैतन्याऽभावविषयत्वेन च यथायोगमुपपत्तेः। सिद्धान्ते शुक्तिरजतादेर्भावरूपाऽज्ञानविषयत्वेनाऽगत्या त्वया ज्ञायमानं रजतं न जानामीत्यत्र तथैव वक्तव्यत्वात्। न च जीवोपाधित्वेनैव तत्स्वीकारः, अन्तःकरणेनाऽपि तन्निर्वाहात्, तस्यापि तैजसत्वेन स्वच्छतया प्रतिबिम्बोद्ग्रहणसामर्थ्यादिति चेन्न। 'अजामेकाम्' इत्यादिश्रुत्या 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'। इति स्मृत्या च सिद्धस्याऽज्ञानस्य कुयुक्तिमात्रेणाऽपहस्तयितुमशक्यत्वात्। नन्वेते श्रुतिस्मृती प्रकृतिं मायां च ब्रूतो नत्वज्ञानमिति चेन्न। प्रकृतेरेव ज्ञाननिवर्त्यतयाऽ-ज्ञानमविद्येत्यादि शब्दैरस्मच्छास्त्रे व्यवहारात्। तदुक्तं स्कान्दे – ''अन्यथाभान-हेतुत्वादियं मायेति कीर्तिता। आत्मतत्त्वतिरस्कारात्तम इत्युच्यते बुधैः। विद्यानाश्यत्वतोऽविद्या मोहस्तत्कारणत्वतः। सद्वैलक्षण्यदृष्ट्ये-यमसदित्युदिता बुधैः। कार्यवद् व्यक्तताऽभावादव्यक्तमिति गीयते। एषा माहेश्वरी शक्तिर्न स्वतन्त्रा परात्मवत्'' इति। सैव विक्षेपशक्तिप्राधान्येन मायेति, आवरणशक्तिप्राधान्येनाऽ-विद्येत्यप्युच्यते। एतदेवाऽभिप्रेत्योक्तं मोक्षधर्मेषु – ''अहर्मुखे विबुद्धः सन् सृजतेऽविद्यया जगत्। अग्रएव महद् भूतमाशु व्यक्तात्मकं मनः। तदिदं नाऽप्रशान्ताय नादान्तायाऽतपस्विने। नाऽवेदविदुषे वाच्यं तथा नाऽनुगताय च। न

तर्कशास्त्रदग्धाय तथैव पिशुनाय च'' इति। एवं युक्तिबलादपि भावरूपाऽज्ञानमेषितव्यम्।

तथा हि – जगदुपादानत्वेनाऽनेकेषां परमाणूनामभ्युपगमे गौरवं, एकस्यैवाज्ञानस्य त्र्यणुकोपादानताऽभ्युपगमे लाघवम्। न चैकस्याऽऽरम्भकत्वे निरन्तरं कार्योत्पत्तिप्रसङ्गः, बहूनामारम्भकत्वेऽपि प्रलयकाले द्व्यणुकोत्पत्ते-र्दुर्वारत्वात्, तत्र चाऽगत्या कालविशेषादेर्नियामकत्वे प्रकृतेऽपि तथैव भविष्यतीति किमनन्तपरमाणुभिः। न चैकस्यारम्भकता लोके न दृष्टेति वाच्यम्, एकस्यैव घटस्य रूपाद्यारम्भकत्वदर्शनात्। न चैकस्य द्रव्यारम्भकत्वाऽनुपपत्तिः, एकेनैव दीर्घतन्तुनाऽऽवर्तितेन सता पटादेरुत्पादनसम्भवात्, स्थलविशेषे तथादर्शनाच्च। द्रव्यगुणादिपरिभाषाणां वैयाकरणानां टिघुभाऽऽदिपरिभाषा-वन्निर्युक्तिकतया पदार्थाऽव्यवस्थापकत्वेनाऽप्रयोजकत्वाच्च। किञ्च परमाणूनां परस्परसंयोगाऽसम्भवादपि न परमाणव उपादानम्। तथा हि – संयोगः किं व्याप्य वर्ततेऽव्याप्य वा? नाद्यः, आकाशे कर्णशष्कुलीसंयोगस्य व्याप्यवृत्तौ देशाऽन्तरीयशब्दग्रहप्रसङ्गात्, तत्रत्यनभसोऽपि कर्णशष्कुल्यवच्छिन्नत्वेन श्रोत्रतया तत्रत्यशब्दस्यापि श्रोत्रसमवेतत्वात्। वृक्षे कपिसंयोगस्य व्याप्यवृत्तिताया अननुभवपराहतत्वाच्च। न द्वितीयः, निरवयवतयाऽवच्छेदकद्वयरहिते तस्मिन्नव्याप्यवृत्तिसंयोगाऽसम्भवात्। न च तत्र दिगादिरवच्छेदकः, असम्बद्ध-स्याऽवच्छेदकत्वाऽयोगात्। सम्बद्धस्याऽवच्छेदकत्वे सोऽपि सम्बन्धः किं व्याप्य वर्ततेऽव्याप्य वा? आद्येऽवच्छेदकस्य व्याप्यवृत्तितया तदवच्छेदेन विद्यमान-संयोगस्याऽपि व्याप्यवृत्तितापत्तिः। अन्त्येऽतत्राऽप्यवच्छेदकाकाङ्क्षा-यामनवस्था। सा च ज्ञप्तिप्रतिबन्धिका। भावाऽभावयोरवच्छेदभेदज्ञानम-न्तरेणैकस्मिन् ज्ञानाऽसम्भवात्। ग्राह्याऽभाव-निश्चयस्य प्रतिबन्धकत्वात्। एवमनन्ताप्रामाणिकाऽणुककल्पनागौरवं च। तस्माद् वरमेकमेवाऽज्ञानमुपादानम्। ननु तावताऽपिक्लृप्तान्यणुकान्येवोपादानं भवन्तु किमक्लृप्ताऽज्ञानकल्पनेनेति चेन्न। तत्राऽपि निरवयवानामणुकानां संयोगाऽनुपपत्तेस्तुल्यत्वात्। किञ्चयं प्रलयकालेऽपि सृष्टिः किं न स्यात् अणुकाऽऽदीनां सत्त्वात्। नचाऽदृष्टोद्बोधाऽभावात् कार्याऽभावः, तस्याऽपि तदानीमापाद्यमानत्वात्। न च कालविशेषाऽभावात् तदभावः, दत्तोत्तरत्वात्। तस्मादघटितघटनापटीयसी मायैवाऽत्र शरणमिति सैवोपादानम्। तदुक्तं स्कान्दे



– ''माया च प्रलये काले परस्मिन् परमेश्वरे। सत्यबोधसुखाऽनन्तब्रह्मरुद्रादिसंज्ञिते। अभेदेन स्थिति याति हेतुस्तत्र सुदुर्गमः'' इति। तथा च श्रुतियुक्तिभ्यां सिद्धं भावरूपाऽज्ञानमेव प्रतिबिम्बोपाधिरिति सिद्धम्।

एतदेवाऽज्ञानं जीवं प्रति ब्रह्माऽभेदस्याऽऽनन्दादेश्चाऽऽपरकम्। तदुक्तं स्कान्दे – ''तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः। तथाऽपि शिवरूपेण न विजानन्ति मायया'' इति। स्मृत्यन्तरेऽपि 'अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः, प्रति।

आवरणं च अस्ति प्रकाशत इति व्यवहारयोग्ये नास्ति न प्रकाशते इति व्यवहारयोग्यत्वम्। तथाहि – जीवब्रह्मयोरभेदाज्जीवस्य पूर्णानन्दस्वरूपत्वाच्चाऽहं पूर्णानन्दोऽहं ब्रह्मेति व्यवहारयोग्यतायां सत्यामपि नाऽहं ब्रह्म नाऽहं पूर्णानन्द इति व्यवहारः सर्वजनीन उपलभ्यते। स च व्यवहार आविद्यकीं नास्तीतिव्य-वहारयोग्यतामन्तरेणामुपन्नः, सैव योग्यताऽऽवरणमित्युच्यते।

ननु योग्यताद्वयं परस्परविरुद्धं कथमेकस्मिन् स्थास्यतीति चेन्न। अस्ति प्रकाशत इति व्यवहारयोग्यतायाः स्वरूपात्मिकायाः पारमार्थिकतया मिथ्याभूतया नास्तीति व्यवहारयोग्यतया समं विषमसत्ताकत्वेन विरोधाभावात्। नन्वेवमानन्दस्यावृतत्वे ज्ञानस्याप्यावृतत्वापत्तिः, उभयोरपि स्वरूपाऽऽत्मकत्वात्। न ह्येकमेवाऽऽवृतमनावृतं चेति सम्भवतीति चेन्न। ज्ञानानन्दयोः कल्पितभेद-सत्त्वेनाऽऽवृतत्वाऽनावृतत्वयोरुपपत्तेः। वस्तुतस्तु नाऽत्र विरोधलेशोऽपि, यथैकस्मिन्नेव घटे रूपमस्ति स्नेहो नास्ति, न चैतावताऽस्तिनास्तीतिविरोधः। एवमेकस्मिन्नेव जीवस्वरूपे आनन्दो नास्ति न प्रकाशत इति व्यवहारयोग्यता वर्तते, ज्ञानं नास्ति न प्रकाशत इति व्यवहारयोग्यता नास्ति, न चैतावता विरोधः, योग्यताद्वयमध्ये एकसत्त्वेऽपरयाऽप्यवश्यं स्थेयमित्यत्राऽऽपादकाऽभावात्। तस्मात् पूर्णानन्दएवावृतः चैतन्यमनावृतमिति सिद्धम्। नन्वज्ञानमावरकमित्य-युक्तम्, आवरणस्याऽप्यनादितयाऽज्ञानजन्यत्वाऽयोगादिति चेन्न। अनादिसिद्ध-स्याऽप्यावरणस्याऽज्ञानप्रयुक्तत्वेन तथा व्यवहारात्। प्रयुक्तत्वं च तत्स्थि-त्यधीनस्थितिकत्वमिति नोक्तदोषः। ननूभयोरनादित्वे प्रयोज्यप्रयोजकभावः कुतः तथात्वे वा वैपरीत्यमेव किं न स्यादितिचेन्न। ''नीहारेण प्रावृताः'' इत्यादिश्रुत्यनुरोधेन ''अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः'' इत्यादिस्मृत्यनुरोधेन चाऽनादिसिद्धयोरपि प्रयोज्यप्रयोजकभावाऽभ्युपगमात्।

इदमेव समाधानं जीवत्वेश्वरत्वादिस्थलेऽपि। ''अथवा देवदेवस्य सर्वदुर्घट-कारिणी। शक्तिरस्ति तया सर्वं घटते माययाऽनयाः'' इति स्कान्दोक्त्या, ''मायामयं वेद स वेदवेदम्'' इति भगवदुक्त्या च सर्वप्रपञ्चस्य मायाधीनत्वाऽवगमात्। तस्मादज्ञानाऽधीनमेवाऽऽवरणमिति।

तस्याऽज्ञानस्यैकत्वात् तत्र प्रतिबिम्बोऽप्येक इत्येकजीववादिनः। न च जीवैक्ये स्वर्गनरकबन्धमोक्षाऽऽदिव्यवस्थानुपपत्तिः, प्रमातृभेदेन तदुपपत्तेः। यदन्तःकरणे साक्षात्कार उत्पद्यते तदन्तःकरणोपादानाऽज्ञानाऽशस्य निवृत्तत्वात्तस्य प्रमातुर्मोक्षः, नान्याऽन्तःकरणावच्छिन्नस्य। तथा च शुकादिमुक्तिश्रवणं काशीमरणान्मोक्षश्रवणञ्च न विरुध्यते। न चाऽज्ञानस्यांश-कल्पनागौरवं, जीवन्मुक्तिप्रतिपादकशास्त्राऽनुरोधेन तदभ्युपगमस्य नानाज्ञानवा-दिनोऽप्यावश्यकत्वात्। अन्यथा साक्षात्कारेणाऽऽवरणांऽशो निवृत्तः, विक्षेपांऽशस्तु प्रारब्धेन प्रतिबन्धान्न निवृत्तइति कल्पनस्याऽप्यवकाशाऽऽपत्तेः। न च जीवैक्ये शरीरान्तराऽवच्छेदेनोत्पन्नसुखदुःखाद्यनुसन्धानप्रसङ्गः, यदन्तःकर-णाऽवच्छेदेन यदुत्पन्नं, तदन्तःकरणाऽवच्छिन्नस्यैव तत्प्रतिसन्धानमित्यभ्युप-गमात्। अन्यथा जीवैक्यस्य नियामकत्वे सर्वस्य जन्माऽन्तरीयसुखदुःखाद्यनु-सन्धानाऽऽपत्तिः। कस्यचित्तदपि दृश्यत इति चेन्न। एतस्याऽपि जीवन्मुक्तेषु दर्शनात्। तस्मादस्मदादीनामनुसन्धानाऽननुसन्धानयोरन्तःकरणभेद एव प्रयोजक इत्येकजीववादिनः।

**वाचस्पतिमिश्रा**स्तु ''इन्द्रो मायाभिः'' इति श्रुत्यनुरोधेनाऽनेकान्य-ज्ञानानि, तत्प्रतिबिम्बा जीवा अप्यनेके, तथा च न बन्धमोक्षव्यवस्थाऽ-नुपपत्तिरित्याहुः।

**संक्षेपशारीरककारा**स्तु-एकमेवाऽज्ञानं, 'अजामेकाम्' इति श्रुतेः, लाघवाच्च। न चेन्द्रो मायाभिरिति श्रुत्या तद्बहुत्वं, मायाशब्दस्य शक्तिपरत्वात्। शक्तिबहुत्वं चाऽभिहितं विष्णुपुराणे - ''शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचराः। शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः'' इति। भागवतेऽपि - ''तेषु कालेष्वजायन्त रचितावयवा हरेः। शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः'' इति। तस्मिन् सत्त्वगुणप्रधानज्ञाने प्रतिबिम्बितं चैतन्यमीश्वरः, अन्तःकरणे प्रतिबिम्बितं चैतन्यं जीवः। ''कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः'' इति शास्त्रात्। अन्तःकरणानामनेकत्वादनेके जीवाः। तथा





च तत्तदन्तःकरणोपादानाऽज्ञानांशस्य तत्तज्ज्ञानान्निवृत्तेस्तस्य तस्य मोक्षः। न चाऽन्तःकरणस्य जीवोपाधित्वे 'भेदस्तु तस्याऽज्ञानकृतो भवेत्' इति स्मृतिविरोधः, जीवब्रह्मभेदस्याऽनादितयाऽज्ञानकृत इत्यस्य यथाश्रुतस्य बाधितत्वात्। अज्ञानस्थित्यधीनस्थितिकत्वविवक्षायान्तु अन्तःकरणोपाधिक-त्वेऽपि तस्याऽक्षतिः। न च कार्यस्याऽन्तःकरणस्याऽनादिजीवोपाधित्वाऽसम्भवः, तस्याऽपि सूक्ष्मरूपेणाऽनादित्वात्। तदुक्तं भगवता - 'पुंस्त्वादिवत्तस्य नतोऽभि-व्यक्तियोगात्'' इति। तस्मादन्तःकरणमेव जीवोपाधिरित्याहुः।

तस्मात् सत्यज्ञानाऽऽनन्दात्मको जीव ईश्वरस्य प्रतिबिम्बः, स एवाऽहङ्कारविशिष्टः त्वम्पदस्य वाच्योऽर्थः। अहङ्काराऽऽदिविनिर्मुक्तस्त्व-म्पदस्य लक्ष्याऽर्थ इति सिद्धम्।

**इति प्रथमः परिच्छेदः।**

* * *

# अथ द्वितीयः परिच्छेदः

इदानीं तत्पदार्थो निरूप्यते। सत्यज्ञानाऽऽन्दरूपो जगज्जन्मादिकर्ता परमेश्वरस्तत्पदार्थः। 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः। स च वेदैकगम्यः 'तं त्वौपनिषदं पुरुषं पृच्छामि नायं वेदविन्मनुते बृहन्तम्' इति श्रुतेः,। 'श्रुत्येकगम्ये सूक्ष्माऽर्थे स तर्कः किंकरिष्यति' इति स्मृतेः। युक्तेश्च। तथाहि – न तावत् क्षित्यादिकं उपादानगोचराऽपरोक्षज्ञानचिकी-र्षाकृतिमज्जन्यं, कार्यत्वात् घटवदित्यनुमानेन तत्सिद्धिः अनुकूलतर्काऽ-भावेनाऽप्रयोजकत्वात्। न च कार्यकारणभावोऽनुकूलस्तर्कः कार्यमात्रेऽपा-दानादेरिव कर्तुरप्यनावश्यकत्वेन कार्यकारणभावस्यैवाऽसिद्धेः। अन्यथा पुच्छत्वेन शरीरत्वेन कार्यकारणभाव इति त्वय्यपि पुच्छं सिध्येत्। न चाऽनुपलब्धिबाधः, अङ्कुरादावतीन्द्रियकर्तुरिव त्वय्यप्यतीन्द्रियपुच्छस्यैवाऽ-नुमानेन विषयीकरणात्। किञ्च क्षित्यादिकं शरीरिकर्तृकमित्यनुमानाच्छरीरिणोऽपि सिद्ध्यापत्तिः। क्षितिकर्तरि ज्ञानादेर्नित्यत्वेन शरीरस्यापेक्षणेनाऽप्रयोजकत्वात् तादृशो न सिद्ध्यतीति चेत्तर्हि कृतेर्नित्यतया ज्ञानस्योपयोगाऽभावेन तद्वतोऽप्यसिद्ध्यापत्तेः। न च कतुर्ज्ञानवत्त्वनियमः, शरीरित्वनियमद्वेषेऽपि बीजाऽभावात्। न च कर्तृत्वस्य ज्ञानाऽऽदिघ-टितत्वात्तत्सिद्धिः, कार्याऽनुकूल-कृतिमत एव कर्तृत्वेन तस्य ज्ञानाऽघटितत्वात्। अन्यथाऽऽत्ममनःसंयोग-घटितस्याऽपि कर्तृत्वस्य निर्वक्तुं शक्यतयेश्वरे तस्याऽपि सिद्धिप्रसङ्गात्। लोके कर्तृत्वस्य दुःखव्याप्यतया ज्ञानादिवन्नित्यदुःख-सिद्ध्यापत्तेश्च। न च श्रुतिबाधात्तदसिद्धिः, आकाशोत्पत्तिप्रतिपादकश्रुतेरिवाऽस्या अपि भङ्क्त्वा व्याख्याने त्वादृशानां सङ्कोचाऽभावात्। नापि वेदवाक्यानि स्वार्थज्ञानपूर्वकाणि, प्रमाणवाक्यत्वाद् गामभ्याजेति वाक्यवदित्यनुमानात्तत्सिद्धिः। शुकादिवाक्ये व्यभिचारात्। न चोद्दिश्य रचितत्वं हेतुः, वेदस्योद्दिश्य रचितत्वे प्रमाणाऽभावात् पौरुषेयत्वप्रतिपादकश्रुतिस्मृतिविरोधाच्च। तस्माद् वेदैकगम्यं ब्रह्मेति सिद्धम्।

तस्य चोपादानत्वे सति कर्तृत्वं तटस्थलक्षणम्। न च ब्रह्मण उपादानत्वे प्रमाणाऽभावः ''तदात्मानं स्वयमकुरुत'' इति श्रुतेः, सन् घट इत्यादि प्रतीतेश्च मानत्वात्। न च सन् घट इतिप्रतीतिः सत्ताजातिमेव विषयीकरोति न तु स्वतादात्म्यमिति वाच्यम्, सत्ताजातेस्तद्विषयत्वे सामान्याऽऽदौ सद्बुद्ध्यनुपपत्तेः। तत्र सत्त्वाऽभावात्। न च सत्तैकार्थसमवायात्तत्र मद्बुद्धिः, गुणादावपि सत्तैकार्थ-



समवायेनैव सद्बुद्धिसम्भवेन तत्र सत्ताजात्यसिद्ध्यापत्तेः। न च द्रव्यमात्रे सत्ताऽभ्युपगमे द्रव्यत्वेन तुल्यव्यक्तिकत्वं बाधकं, द्रव्यत्वजातिसाधकस्य पाषाणादिसाधारणव्यवहारस्याऽभावेच तस्य जातित्वाऽभावात्। न च गुणसमवायिकारणताऽवच्छेदकतया द्रव्यत्वजातिसिद्धिः, क्रियासमवा-यिकारणताऽवच्छेदकतया मूर्तत्वस्याऽपि जातित्वाऽऽपत्तेः। अस्तु वा द्रव्यत्वव्याप्यैव सत्ता, नित्यद्रव्यमात्रे तदभ्युपगमात्। अनित्यद्रव्येषु संयुक्तसमवायेनाऽपि सह बुद्ध्युपपत्तेः। न च पृथिवीत्वादिना सङ्करः, तस्याऽदोषत्वात्। तस्मात् पराऽभिमतसत्ताजातौ प्रमाणाऽभावात् सत्तादात्म्यमेव सद्बुद्ध्यालम्बनमिति सद् ब्रह्म जगदुपादानम्।

उपादानत्वञ्च कार्यतादात्म्यवत्कारणत्वम्। तादात्म्यञ्च न भेदाऽभेदा-त्मकम्, समानसत्ताकयोर्भेदाऽभेदयोर्विरोधात्। नाप्यत्यन्ताभेदः कार्यकारणभा-वाऽनुपपत्तेः। किन्तु सत्ताऽनवच्छेदकभेदवत्त्वम्। भेदस्य सत्ताऽनवच्छेदकत्वञ्च सामानाधिकरण्यबुद्ध्यविरोधित्वम्। तथा हि – दण्डघटयोरिव मृद्घटयोरपि भेद एव परन्तु स दण्डघटभेदापेक्षया विलक्षणः, सामानाधिकरण्यबुद्ध्यविरोधित्वात्। अथवा तादात्म्यं पदार्थाऽन्तरमेव, नियतपदार्थवादस्य दूष्यत्वात्। तच्च तत्तत्प-दार्थनिरूपितं भिन्नमेवेति न समवायोक्तदोषप्रसङ्गः तस्मादुभयथाऽपि न दोषः।

कर्तृत्वञ्च कार्याऽनुकूलज्ञानवत्त्वम्, तच्च कार्याऽनुकूलं ज्ञानं ब्रह्मणः स्वरूपात्मकमेव। तदेव तत्तत्सूक्ष्मरूपाऽऽपन्नपदाऽर्थाऽवच्छिन्नं सत्कल्पितभेदेन स्वस्मिन्नपि स्वयं तिष्ठतीति ब्रह्मणः कार्याऽनुकूलज्ञानवत्त्वम्।

यत्त्वविद्यावृत्तिः कार्याऽनुकूलं ज्ञानमिति, तन्न। तस्याः कार्यत्वेनात्राऽपि वृत्त्यन्तराऽपेक्षायामनवस्थानात्। अनादित्वे च स्वरूपज्ञानेनैवाऽलं, किमविद्या-वृत्त्या? न चैवं कर्षकस्याऽङ्कुरम्प्रति कर्तृत्वप्रसङ्गः, कार्यतद्गोचरचिकीर्षाऽ-न्यतरजनकत्वं हि ज्ञानस्य कार्यानुकूलत्वम्, तच्च कर्षकज्ञाने नास्त्येवेति न तस्य कर्तृत्वम्। चिकीर्षा च कृतिसाध्यत्वप्रमाजन्या विवक्षिता, तेनाऽङ्कुरः कृतिसाध्य इति भ्रमजन्यचिकीर्षामादाय नाऽतिप्रसङ्गः। एतेन कुलालपितुर्घटक-र्तृताऽऽपादनमपि निरस्तम्। तज्ज्ञानस्य कार्यं तद्गोचरचिकीर्षाम्प्रति वा जनकत्वाऽभावादित्याहुः।

वस्तुतस्तु उपादानगोचरकृतिमत्त्वमेव कर्तृत्वम्। ईश्वरेऽप्यनादिवृत्तेर-भ्युपगमान्न कर्तृत्वाऽनुपपत्तिः। न चाऽनादिकृतौ प्रमाणाऽभावः, 'विश्वस्य कर्ता' इत्यादि श्रुतेरेव मानत्वात्। करोतीति व्युत्पत्त्या कृतिमत्त्वस्यैव

कर्तृशब्दाऽर्थत्वात्। न च ब्रह्मणो जगत कर्तृत्वे प्रमाणाभावः, ''विश्वस्य कर्ता भुवनस्य गोप्ता'' इत्यादिश्रुतेः, 'अस्ति कश्चित्स्वतः सिद्धः सत्यज्ञानसुखाऽद्वयः। विश्वस्य जगतः कर्ता पशुपाशविमोक्षणः' इत्यादिस्मृतेश्च मानत्वात्। तस्मादुपादानत्वे सति कर्तृत्वं ब्रह्मणस्तटस्थलक्षणमिति सिद्धम्।

स्वरूपलक्षणन्तु सत्यज्ञानानन्दः, तस्मात् सत्यज्ञानाऽऽनन्दरूपं ब्रह्म वेदैकसमधिगम्यमिति सिद्धम्।

ननु न ब्रह्म वेदैकसमधिगम्यं वेदान्तानामुपासनापरत्वात्। कर्मकाण्डस्य कर्मस्वरूपमात्रप्रतिपादकत्वादिति चेन्न। उपक्रमोपसंहारादितात्पर्यलिङ्गैः सिद्धे ब्रह्मण्येव वेदान्ततात्पर्यस्य भाष्यादौ दर्शितत्वात्। ननु कथं सिद्धवस्तु प्रतिपादनीयं वेदान्तैः, लोके कार्याऽन्वित एव पदानां सङ्गतिग्रहणादिति चेन्न। यथा गङ्गापदस्य प्रवाहे शक्तिग्रहेऽपि गङ्गायां घोष इत्यत्र प्रवाहप्रतिपादने तात्पर्याऽभावात् प्रवाहस्त्यज्यते, एवमत्राऽपि कार्यप्रतिपादने तात्पर्याऽभा-वात्कार्याऽन्विते शक्तैरपि पदैः कार्यम्परित्यज्य शुद्धब्रह्मण एव लक्षणया प्रतिपादने बाधकाऽभावात्। वस्तुतस्तु न कार्याऽन्विते शक्तिः, किन्त्वन्वितमात्रे पदार्थमात्रे वा लाघवात्। न च ततोऽपि लाघवाज्जातिमात्रे शक्तिः, यदा तज्जातिमात्रस्य केनाऽप्यस्मरणात्, विशिष्टोपस्थितेश्च विशिष्टे शक्तिं विनाऽनुपपत्तेः। पदान्नियतोपस्थितेः शक्तिमाध्यत्वात्। न च पदाऽर्थमात्रे शक्तिस्वीकारेऽन्विते शक्तिरिति विवरणविरोधः, तस्य जातावेव शक्तिरितिवन्मतान्तरत्वात्। तस्मात् सिद्धब्रह्मप्रतिपादने न काऽप्यनुपपत्तिः।

ननु सिद्धवस्तुबोधकत्वे वेदान्तानां शास्त्रत्वं न स्यात्। प्रवर्तकं निवर्तकं वा शास्त्रम्, न च सिद्धवस्तुज्ञानात् प्रवृत्तिनिवृत्ती स्तः, तदुक्तम् – ''प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तद्धि शास्त्रं प्रचक्षते'' इतीति चेन्न। हितबोधकत्वेनैव शास्त्रोपपत्तेः। तथाहिफलवानज्ञातोऽर्थो वेदेन बोधनीयः न तु कार्यमेव तत्र बीजाऽभावात्। ब्रह्म चाऽज्ञातं, आनन्दाऽवाप्तिश्च तज्ज्ञानैकसाध्येति फलवच्च, तस्मात्तद्बोधकत्वेनैव वेदान्तानां शास्त्रत्वम्। तदुक्तम् – ''शास्त्रञ्च हितशासनात्'' इति। तस्मान्न सिद्धवस्तुबोधनेऽपि शास्त्रत्वक्षतिः।

तथा च कर्तृत्वादिविशिष्टः परमेश्वरस्तत्पदस्य वाच्योऽर्थः। कर्तृत्वादिविनिर्मुक्तस्तत्पदस्य लक्ष्यार्थ इति स्थितम्। एतयोश्च तत्त्वपदार्थ-योरत्यन्तमभेद एव, 'तत्त्वमसि' 'अहं ब्रह्माऽस्मि' इत्यादिश्रुतेः। श्रूयते च



परमहंसोपनिषदि – ''परमात्मात्मनोरेकत्वज्ञानात्तयोर्भेद एव विभग्नः'' इति। ''अद्वैते परमस्थितिः'' इति च ''एकः समस्त यदिहाऽस्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभिरात्माऽपि तथैकः सन् पृथक् पृथक्'' इति विष्णुपुराणात्। ''देहं मनोमात्रमिमं गृहीत्वा ममाऽहमित्यन्धधियो मनुष्याः। एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति। विविक्तः क्षेमशरणो मद्भावविमलाशयः। आत्मानं चिन्तयेदेकमभेदेन यथा मुनिः। क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा। स्वपराऽभिनिवेशेन विना ज्ञानेन देहिनाम्। विद्याऽऽत्मनि भिदाबाधः'' इत्यादि भागवतात्। 'घटाऽऽकाश-महाकाशविभागः कल्पितो यथा। तथैव कल्पितो भेदो जीवात्मपरमात्मनोः। कल्पितोऽयं द्विजा भेदो नाऽभेदं बाधते सदा। कल्पितानामवस्तुत्वाद्विरोधश्च सिद्ध्यति। महापापवतां नृणां परमाऽद्वैतवेदने। प्रद्वेषो जायते साक्षाद्वेदजन्ये शिवेऽपि च। स यो ह वै तत्परमं ब्रह्म वेद सुरर्षभाः। ब्रह्मैव भवति ज्ञानान्नास्ति संशयकारणम्' इत्यादिस्मृतिसहस्राच्च।

नच सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्माऽऽक्रान्तयोरभेदस्य बाधित-त्वादुक्तश्रुत्यादेरन्याऽर्थता, एकस्मिन्नेवाऽवच्छेदभेदेन संयोगतदभावयोरिवाऽव-च्छेदभेदेन सर्वज्ञत्वाऽऽद्युपपत्तेः। अन्तःकरणाऽवच्छिन्नस्य किञ्चज्ज्ञत्वाद्य-नवच्छिन्नस्य सर्वज्ञत्वादीत्यभ्युपगमे बाधकाभावात्।

वस्तुतस्तु विरुद्धधर्माणां मिथ्यात्वादभेदे न काऽप्यनुपपत्तिः। मिथ्यात्वञ्च – स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वम् मिथ्यात्वम्। स्वस्य मिथ्यात्वेनाऽभिमतस्य यदनधिकरणं घटादि, तदनधिकरणं यस्य ब्रह्मरूपाऽत्यन्ताऽभावस्य, तत्प्रतियोगित्वं मिथ्यात्वमित्यर्थः। अथवा-स्वाऽनधिकरणाऽवृत्तिस्वाऽभाववृत्तित्वं मिथ्यात्वम्।

न च ब्रह्मणोऽत्यन्ताऽभावरूपत्वे प्रमाणाऽभावः, माण्डूक्योपनिषदि उत्तरतापनीये च – ''प्रपञ्चोपशमः शिवोऽद्वैतः, प्रपञ्चोपशमं शिवमद्वैतम्'' इत्यादि श्रुतेः। ''त्वन्मायैषा तन्निषेधं प्रपद्ये'' इत्यादिस्मृतेश्च मानत्वात्।

न च विरुद्धधर्माणां मिथ्यात्वे प्रमाणाऽभावः, प्रपञ्चमिथ्यात्व-बोधकप्रमाणेनैव तदन्तर्गतधर्माणामपि मिथ्यात्वसिद्धेः। ननु प्रपञ्चमिथ्या-त्वस्य प्रत्यक्षप्रतिपन्नमेवतत्र प्रमाणाऽभावात्। नच ''नेह नानास्ति'' इति श्रुतिर्मानं,

तस्याः ब्रह्मणि सर्वज्ञनिरूपितभेदनिषेधे तात्पर्यात्। न च प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतवदित्यनुमानेन तत्सिद्धिः। दृष्टान्ताऽसम्प्रतिपत्तेर्घटः सन्निति प्रत्यक्षबाधाच्च न तस्य मिथ्यात्वम्। तस्माद्विरुद्धधर्माणां सत्यत्वान्न तदाक्रान्तयोरभेद इति चेन्न। 'यच्चिकेत सत्यमित्रं त्वमोघमतोन्यदाता' इत्यादिश्रुतिभिः, 'ईक्षेत विभ्रममिदं मनसो विलासं, दृष्टं विनष्टमतिलोलमलातचक्रम्। विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः। तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्य स्खलिता मतिर्मम। ययाऽहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे। द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। वासुदेवात्परो ब्रह्मन्नवाच्योऽर्थोऽस्ति तत्त्वतः। स शिवः सत्यचैतन्यसुखाऽऽनन्दस्वलक्षणः। अपरः कल्पितः साक्षात् ब्रह्मण्यध्यस्तमायया' इत्यादिस्मृतिभ्यश्च प्रपञ्चस्य मिथ्यात्वाऽवधारणात्। ननु यच्चिकेतेति श्रुतिः सत्यत्वमेव बोधयति नतु मिथ्यात्वमिति चेन्न। श्रुतितात्पर्याऽनवबोधात् परमेश्वरी यच्चिकेत, यत्पदार्थजातं कर्तव्यतयाऽवगच्छति तन्मायाकार्यत्वात्सत्यं न किन्तु मोघमिति। मोघमेव मिथ्याभूतमेवेति श्रुत्यभिप्रायात्। अतएवोक्तं स्कान्दे - 'मायया निर्मितं सर्वं मायैव हि निरूपणे' इति। श्रूयते मैत्रायणीयोपनिषदि चतुर्थप्रपाठके - ''इन्द्रजालमिव मायामयं स्वप्नमिव मिथ्यादर्शनम्'' इति, ''चित्रभित्तिरिव मिथ्यामनोरमम्'' इति च। एवमस्थूलाऽऽदिवाक्यपर्यालोचनयाऽपि प्रपञ्चमिथ्यात्वमेव श्रुतितात्पर्यविषयीभूतम्। यत्तु नेह नानेति श्रुतिर्ब्रह्मणि सर्वज्ञप्रतियोगिकभेदनिषेधपरेति, तन्न। त्वन्मते जीवानामसर्वज्ञत्वात्तत्प्रतियोगिकभेदस्य निषेधाऽयोगात्। न च नित्यज्ञानवत्प्रतियोगिकभेदनिषेधपरा, अप्रसक्तस्य तस्य निषेधाऽयोगात्। न च भ्रमप्रसक्तस्य निषेधः धर्मिग्राहकश्रुतिविरोधेनैतादृशभ्रमाऽसम्भवात्। तस्मात्तद्वाक्यं प्रपञ्चनिषेधक-मेवेति तत्र प्रतिपन्नस्य तत्रैव निषेधान्मिथ्यैव प्रपञ्चः। तदुक्तम् - ''तस्माद्विश्वस्य सर्वस्याऽधिष्ठाने परमाऽऽत्मनि। निषेधान्नेह नानेति मिथ्यात्वं तस्य सिद्ध्यति'' इति।

एवमविद्याऽतिरिक्तदोषाऽजन्यं जडं मिथ्या, दृश्यत्वात् शुक्तिरजतवदित्यनुमानेनाऽपि प्रपञ्चस्य मिथ्यात्वसिद्धिः।

न च दृष्टान्ताऽसिद्धिः। मिथ्यारजतोत्पत्त्यनङ्गीकारे इदं रजतमिति भ्रान्तेरेवाऽनुपपत्तेः। तथा हि - न तावदिदं ज्ञानद्वयम्, रजतार्थिनः पुरोवर्तिनि



प्रवृत्त्यनापत्तेः। न च स्वतन्त्रोपस्थितेष्टभेदाऽग्रहात्प्रवृत्तिः, तन्मते भेदस्य स्वरूपाऽऽत्मकतया तदग्रहाऽयोगात्। लाघवेनेष्टोपस्थितेरेव प्रवर्तकत्वाच्च।

नाऽपि पारमार्थिकस्यैव रजतस्योत्पत्तिरिति दिगम्बरमतं साधु, तथात्वे त्रैकालिकबाधाऽनुपपत्तेः।

नाऽप्यन्यथाख्यातिः, व्यवहितेन समं प्रत्यासत्त्यभावेन चक्षुषा तद्ग्रहणाऽसम्भवात्। ज्ञानस्य प्रत्यासत्तित्वस्य प्राङ्निरस्तत्वेनाऽलौकिकभानाऽसम्भवाच्च। न च दोष एव प्रत्यासत्तिः, दोषस्य प्रत्यासत्तित्वे भ्रमानुमित्युच्छेदप्रसङ्गात्। समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात् अप्रामाण्यस्य परतस्त्वमपि लुप्येत, दोषस्य प्रत्यासत्तितया ज्ञानसामान्यसामग्रीप्रविष्टत्वेनाऽप्रमायास्तदतिरिक्तकारणजन्यत्वाऽभावात्। नाऽपि दोषादसन्निकृष्टस्यैव भानं, लाघवेन विशिष्टप्रत्यक्षमात्रे विशेषणसन्निकर्षस्य कारणत्वात्। अन्यथा संवादिप्रवृत्तावेव विशिष्टज्ञानं कारणमिति जितं गुरुणा। तस्मान्नाऽन्यथाख्यातिः सम्भवति।

नाऽपि बौद्धाद्यभिमताऽसत्ख्यातिः। असतो ज्ञानविषयत्वाऽनुपपत्तेः। नह्यत्यन्ताऽसति धर्मिणि विषयत्वधर्मः सम्भवति, न वा तत्र रजतत्वादयो धर्माः, तदभावेनेदं रजतमिति ज्ञानस्य रजतं विषय इति कथमध्यवसेयमायुष्मता। नन्वसतो ज्ञानविषयत्वाऽभावे शशशृङ्गं नास्तीत्वादिप्रतीतीनां का गतिरिति चेन्न। शशशृङ्गशब्दादुत्पन्ने ज्ञानाऽऽभासे सविषयत्वनिषेधाऽभिप्रायत्वात्तद्वाचः। नन्वर्थाऽभावे कथमाभासस्योत्पत्तिः, ताडनेन दुःखात्मकवृत्तेरिव, शब्दश्रवणेन तदुत्पत्त्यभ्युपगमात्। नन्वेवमव्युत्पन्नस्याऽपि शब्दश्रवणादाभासोत्पत्तिप्रसङ्गः, अन्वयव्यतिरेकाभ्यां तादृशशक्तिज्ञानस्याऽपि तत्र हेतुत्वात्। तस्मान्नाऽसतो ज्ञानविषयत्वम्। तथा च भ्रमविषयीभूतं रजतं तत्रैवोत्पद्यत इति तन्मिथ्यैव।

तस्य चाऽन्तःकरणाऽवच्छिन्नचैतन्यनिष्ठमवस्थाज्ञानमुपादानम्, वृत्तिनिर्गमनदशायां तस्याऽपि शुक्त्यवच्छिन्नचैतन्यसम्बद्धतया रजताद्युपादानत्वोपपत्तेः। तच्च रजतमन्तःकरणाऽवच्छिन्नचैतन्यसम्बद्धं सदेवोत्पद्यत इति स्वाऽऽकार वृत्तिं विनैव प्रथते।

न च तत्र रजतोत्पत्तौ सर्वेषां तद्ग्रहप्रसङ्गः, परमते तत्तदपेक्षाबुद्धिजन्यं द्वित्वं तेनैव गृह्यते इतिवत् तत्तदज्ञानारब्धं रजतादि तमेव प्रतिभासते इत्यभ्युपगमात्। अथवा परकीयदुःखादिवत् तत् परं प्रति स्वरूपाऽयोग्यमेव।

अतएवाऽन्यजीवम्प्रत्येव स्वरूपाऽयोग्यत्वात् परमेश्वरेण तद् गृह्यते। न चैवं तस्याऽपि भ्रान्तत्वापत्तिः, अनावृतस्वरूपत्वेन तदभावात्।

एवमनुमानेनाऽपि तस्य मिथ्यात्वसिद्धिः। तथा हि, स्वसमानाऽधिकर-णाऽत्यन्ताऽभावाप्रतियोगि शुक्तिरजतं, स्वाऽनधिकरणनात्राऽवृत्त्यत्यन्ताभाव-प्रतियोगि दृश्यत्वात्, संयोगवत्, इत्यनुमानेन प्रथमनिरुक्तस्य, स्वाऽनधिकरणमात्राऽवृत्त्यभावप्रतियोगि, शुक्तिरजतं प्रतियोगिव्यधिकरणस्वाऽ-भाववृत्तिदृश्यत्वात्, आकाशाऽत्यन्ताऽभाववत्, रजतं स्वाऽभाववृत्तिदृश्यत्वात्, आकाशाऽत्यन्ताऽभाववत्, स चाऽभावः रजताऽनधिकरणाऽवृत्तिः, सम्बन्ध-विशेषशालित्वात्, रजतवदित्यनुमानद्वयेन वा, इच्छा अष्टद्रव्यातिरिक्तद्रव्या पूर्वोदाहृतश्रुत्यादिबलात्प्रपञ्चो मिथ्यैव।

एवं दृश्यत्वाऽन्यथाऽनुपपत्त्याऽपि प्रपञ्चस्य मिथ्यात्वम्, सत्यत्वे विषयविषयिभावाऽसम्भवात्, ज्ञानज्ञेययोः सम्बन्धाऽभावात् स्वरूपसम्बन्धस्य दूषितत्वात्। किञ्च स्वरूपसम्बन्धत्वादिनाऽप्यतीतादिस्थले विषयाऽसत्त्वाज्ज्ञान-स्वरूपमेव सम्बन्धो वाच्यः। अथ च ज्ञानस्वरूपमात्रं सकलसाधारणमिति तज्ज्ञानं सकलविषयकं स्यात् स्वरूपाऽऽख्यसम्बन्धस्य सर्वैः समं सत्त्वात्। तस्मादेतादृश्यस्थले युक्तेरप्रसरादाविद्यकसम्बन्धस्यैव वाच्यतया मिथ्यैवं प्रपञ्चः। तदुक्तं स्कान्दे – 'प्रतीत्या केवलं शक्तिरचिद्रूपा तमोमयी। सर्वप्रकारैर्विद्भि-रूप्याऽस्ति शाङ्करी। तया दुर्घटकारिण्या तादात्म्येनैव सङ्गतम्' इति।

एवं युक्त्यन्तरादपि तस्य मिथ्यात्वम्। सत्यप्रपञ्चवादी प्रष्टव्यो घटः कुत्राऽस्तीति? यत्र प्रतीयते तत्रैवेति चेद् घटाऽभाववत्यपि स्यात्, दोषात्तत्राऽपि प्रतीतिसम्भवात्। यत्र प्रमीयते तत्राऽस्तीति चेत्, तर्हि प्रमैव कुत्र, यत्र बाधो नास्ति तत्रेति चेत्, यत्र सर्वस्य बाधो नास्ति सा प्रमा उत यस्य कस्यचित्? नाऽद्यः, कालाऽन्तरीयबाधाऽभावस्य निर्णेतुमशक्यत्वात्। नाऽन्त्यः, भ्रमस्यलेऽपि तस्य सुलभत्वात्। तस्मात्कुत्राऽस्तीति प्रमातुमशक्यत्वान्मिथ्यैव घटादिः प्रपञ्चः।

एवमुत्पत्त्यनुपपत्त्याऽपि घटादेर्मिथ्याऽत्वम्। तथा हि न तावत्सत उत्पत्तिः विरोधात्। नाऽप्यसतः, शशशृङ्गादेरप्युत्पत्तिप्रसङ्गात्, घटादेरविशेषात्। ननु घटादेः प्रागभावस्य सत्त्वादुत्पत्तिः, शशशृङ्गस्य तदभावान्नोत्पत्तिरिति चेन्न। प्रागभावस्य निरस्तत्वात्। अस्तु वा प्रागभावः तावताऽप्यनुत्पन्नघटेन सम



सम्बन्धाऽभावेन तस्य घटीयत्वाऽयोगात्। प्रागभावस्वरूपेणैतदीयत्वे शशशृङ्गीयत्वस्याऽप्यापत्तेः। न च फलबलेन घटीयत्वमात्रताऽभ्युपगमः, स्वरूपस्योभयसाधारण्ये फलस्यैवाऽनुपपत्तेः। अन्यथा फलबलात्किञ्चिदेव जायते किञ्चिन्नेति किं तत्र सामग्रीभेदकल्पनया। ननूत्पत्तेः पूर्वं सदेव कारणेनाऽभिव्यज्यत इति चेन्न। अभिव्यक्तेरपि प्राक् सत्त्वे उत्पत्त्यनुपपत्तेः, असत्त्वे च पूर्वोक्तदोषात्। नन्वेकस्यैवाऽवस्थाभेदमात्रमिति चेन्न। अवस्थायामपि सत्त्वाऽसत्त्वविकल्पग्रासत्रासाऽनपायात्। नन्वेवं कथं सिद्धान्ते सूक्ष्मरूपाऽभ्युपगम इति चेन्न। अस्माकं श्रुत्याद्यवष्टम्भेनैव पदार्थाऽभ्युपगमः, नतु परमत इव युक्त्यवष्टम्भेनेति प्रागुक्तत्वात्। तदुक्तं स्कान्दे ''अतीन्द्रियार्थविज्ञाने मानं नः श्रुतिरेव हि। श्रुत्येकगम्ये सूक्ष्मार्थे स तर्कः किङ्करिष्यति। मानाऽनुग्राहकस्तर्को न स्वतन्त्रः कदाचन'' इति। तथा च सूक्ष्मरूपे श्रुतिः 'तद्भेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते' इति। तस्मात्सत्त्वाऽसत्त्वाभ्यां दुर्निरूपतया कार्यं मिथ्यैव। तदुक्तम् – ''यथा सतो जनिर्नैवमसतोऽपि जनि न च। जन्यत्वमेव जन्यस्य मायिकत्वं समर्थकम्'' इति। तदेतत्सर्वमभिसन्धायोक्तं भागवते – ''तस्मादिदं जगदशेषमसत्स्वरूपं, स्वप्नाभमस्तधिषणं पुरुदुःख-दुःखम्। त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवाऽवभाति'' इति। असत्स्वरूपं सद्विलक्षणस्वरूपम्।

ननु प्रपञ्चस्य मिथ्यात्वेऽर्थक्रियाकारित्वं न स्यात्। शुक्तिरजतादौ तददर्शनादिति चेन्न। रजतादेरपि प्रीतिद्वेषाद्यर्थक्रियाकारित्वात्। न च तत्र ज्ञानस्यैवाऽर्थक्रियाकारित्वं, उदासीनज्ञानादपि तदापत्तेः। रजतादिज्ञानत्वेन जनकत्वे च ज्ञातरजतत्वेन रजतज्ञानत्वेन वेत्यत्र नियामकाऽभावादुभयोरपि जनकत्वात्। न चाऽतीतादाऽर्थाऽभावाद् ज्ञानस्यैव जनकता, अतीतादेरपि सूक्ष्मरूपेणाऽऽमोक्षं सत्त्वात्। अन्यथा विषयतयाऽवच्छेदकत्वस्याऽप्यसम्भवात्। नन्वेवमपि शुक्तिरजतादिविलक्षणाऽर्थक्रियाकारित्वं न स्यादेवेति चेन्न। व्यावहारिकत्वेन तदुपपत्तेः। तदुक्तं स्कान्दे – ''कल्पितानामवस्तूनां मध्ये केचन मायया। परमाऽर्थतया क्लृप्ता व्यवहारे सुरर्षभाः। आकाशादि जगच्छुक्तिरूप्ये ते कथिते मया'' इति। पराशरोपपुराणे सप्तदशेऽध्यायेऽप्युक्तम् – ''शुक्तिकाव्यवहारे तु सती न रजतोपमा'' इति।

नन्वेवमपि स्वर्गादेर्मिथ्यात्वे तत्साधनताबोधकवेदस्याऽप्रामाण्याऽऽ-पत्तिरिति चेन्न। द्विविधं प्रामाण्यम्। अबाधितार्थबोधकत्वरूपं, अविद्याऽतिरिक्त-

दोषाऽजन्यपदार्थबोधकत्वरूपञ्च। इदमेव व्यावहारिकं प्रामाण्यं तदुभयमपि वेदेऽस्ति। कर्मकाण्डादिमहातात्पर्यविषयीभूतब्रह्मणो बाध्यत्वात्। अवान्तर-तात्पर्यविषयीभूतस्य स्वर्गसाधनत्वादेर्व्यावहारिकत्वात्। तदुक्तं स्कान्दे - ''व्यावहारिकसत्याऽर्थं साक्षात्सत्यार्थचिद्घनम्। उभयं वक्ति वेदस्तु मार्गा नैवं वदन्ति हि'' इति। तस्मान्मिथ्यैव प्रपञ्चः।

न च घटः सन्नित्यादिप्रत्यक्षबाधः, तस्य विद्यमानतामात्रविषयत्वेन निरुक्तमिथ्यात्वाऽबाधकत्वात्। देहाऽऽत्मप्रत्यक्षवन्निर्णीततात्पर्यकश्रुतिबाधि-तत्वेनाऽप्रमाणत्वाच्च अनुमानादिबाधेऽप्येतदेवोत्तरम्। तस्मात्प्रपञ्चाऽन्तर्गतसर्व-त्वकिञ्चिज्ज्ञत्वादिधर्माणां कल्पितत्वेन तदाक्रान्तयोर्जीवपरयोस्तत्त्वमस्यादिश्रु-त्याऽभेदबोधने न काऽप्यनुपपत्तिः।

तत्त्वमस्यादिश्रुतिश्चाऽखण्डाऽर्था, लक्षणया चिन्मात्र बोधकत्वात्। तथा च प्रयोगः - 'तत्त्वमस्यादिवाक्यं, स्वपदोपस्थापितपदार्थनिरूपितसंसर्गाऽ-गोचरप्रमितिजनकं, एकप्रातिपदिकाऽर्थमात्रतात्पर्यकत्वात्, सोऽयं देवदत्त इत्यादिवाक्यवत्' इति। ननु कथं वाक्यस्याऽखण्डाऽर्थत्वम्, तस्य संसृष्टाऽ-र्थबोधकत्वस्वाभाव्यात्। चिन्मात्रस्य तत्पदार्थैकदेशस्य तत्पदघटितवाक्यार्थ-त्वाऽयोगाच्च। एवं लक्षणयेत्यपि न युक्तम्, लक्षणाबीजाऽन्वयानुपपत्त्यभावात्। न च तत्त्वम्पदयोर्विशिष्टवाचकत्वाद्वि-शिष्टयोश्च समानसत्ताकभेदाऽयोगाच्चि-न्मात्रलक्षणा पदद्वयेऽप्यावश्यकीति वाच्यम्। 'दण्डी कुण्डली' इति वाक्येनैकस्मिन्नेव पुरुषे दण्डकुण्डलवैशिष्ट्यवत् तत्त्वमसीति वाक्येनाऽ-प्येकस्मिन्नेव चैतन्येऽ हङ्कारादिवैशिष्ट्यबोधनसम्भवात्। ननु दण्डकुण्डलयोर-विरोधात्तद्वैशिष्ट्यमेकस्मिन् बोध्यतां नाम, प्रकृते तु विरुद्धविशेषणद्वयवैशिष्ट्यं कथमेकत्र बोधनीयमिति चेन्न। अवच्छेदभेदेनाऽविरोधस्य त्वयैवोपपादितत्वात्। तस्मान्न लक्षणा, न वाऽखण्डार्थतेति चेदुच्यते - लोके वेदे च तात्पर्याऽनुपपत्तिरेव लक्षणाबीजं न त्वन्वयाऽनुपपत्तिः, 'कृष्णेयं गौः यतो बहुक्षीरा' 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिप्राशस्त्यप्रतिपादकाऽर्थवादवाक्येषु तदभावेऽपि तात्पर्याऽनुपपत्त्यैव लक्षणाकल्पनात्। एवञ्च प्रकृतेऽप्युपक्रमोपसंहारादितात्पर्यलिङ्गैः शुद्धेऽद्वितीय-ब्रह्मणि सर्ववेदान्ततात्पर्याऽवधारणात् तदनुरोधेन लक्षणा। तथा च तत्त्वम्पदाभ्यां विशिष्टे शक्ताभ्यां जडांऽशं परित्यज्य भागत्यागलक्षणया चिन्मात्रं बोध्यत इति भवति वाक्यमखण्डार्थम्। तदुक्तं ब्रह्मगीतायाम् - ''त्वं महाशब्दलक्ष्यार्थ-साक्षात्प्रत्यक् चितिः परा। तच्छब्दस्य च लक्ष्यार्थः सैव नाऽत्र विचारणा।



तदर्थैक्यविरुद्धांऽशं त्यक्त्वा वाच्यगतं श्रुतिः। अविरुद्धचिदाकारं लक्षयित्वा ब्रवीति हि। तत्त्वं शब्दार्थलक्ष्यस्य चिन्मात्रस्य पराऽऽत्मनः। एकत्वं यत्स्वतः सिद्धं स हि वाक्यार्थ आस्थितः'' इति। अखण्डाऽर्थत्वञ्च - समभिव्याहृत-पदोपस्थापितपदार्थनिरूपितसंसर्गाऽगोचरप्रमितिजनकत्वम्। 'अप्राप्तयोः प्राप्तिः संयोगः' इत्यादिलक्षणवाक्येऽव्याप्तिवारणाय समभिव्याहृतपदोपस्थापितपदार्थ-निरूपितेति, 'जलेन सिञ्चति' इत्यादिवाक्यात्पदद्वयेऽपि शक्तिभ्रमाज्ज्ञायमानस्य घटवति घटोऽस्तीत्यादिज्ञानस्याऽपि प्रमात्वात्तत्राऽतिव्याप्तिवारणायोपस्थापितेति। नन्वसम्भवमिदं लक्षणं, समभिव्याहृताभ्यां तत्त्वम्पदाभ्यां लक्षणयोपस्थितस्य चैतन्यस्याऽभेदरूपसंसर्गप्रतिपादनादिति चेन्न। अभेदस्याऽसम्बन्धत्वात्। अन्यथा घटस्य घट इति धीप्रसङ्गात्। नन्वारोपे सति निमित्ताऽनुसरणं, न तु निमित्तमसत्यारोप इति चेन्न। नूनमनयैव वाचोभङ्ग्या केनचिद् धूर्तेन प्रतारितोऽस्ति भवान्। ननु रे यदि सामग्र्यां सत्यामपि कार्यं नापादनीयं, तर्ह्युच्छिन्नं पदार्थवैजात्येन। तथाहि - घटे पटत्वं, अश्वे गोत्वं, त्वयि पशुत्वमित्याद्यप्यस्तु। न च घटादौ पटत्वाऽऽद्यनुपलब्धिर्बाधिका, आरोपे सतीत्यादिमन्त्रस्य तत्राऽपि पठितुं शक्यत्वात्। किञ्चैवमभावमात्रसुच्छिन्नम्, सर्वत्र सर्वे पदार्थास्तिष्ठन्ति तदुपलम्भकसामग्र्यपि तिष्ठत्येव। अथाऽपि नोपलभ्यन्ते, आरोपे सति निमित्ताऽनुसरणमित्यभ्युपगमात्। तस्माद्यत्किञ्चिदेतत् तस्मादभे-दस्याऽसम्बन्धत्वादखण्डार्थलक्षणं सुस्थम्।

यत्तु वाक्यस्य संसर्गबोधकत्वस्वाभाव्यमिति, तत्संसर्गपरवाक्ये एव, न तु स्वरूपपरवाक्येऽपि। यदपि पदार्थैकदेशस्य वाक्याऽर्थत्वाऽयोग इति, तदपि संसर्गपरवाक्य एव। चैतन्यस्य पदजन्यप्रतीतिविशेष्यतयैकदेशत्वाऽभावाच्च।

नन्वेवमपि न वाक्यस्याऽखण्डार्थता युक्ता, तथात्वे सर्वपदलक्षणाऽऽपत्तेः। किन्त्वेकस्मिन् पदे एव लक्षणा। तथा च 'तत्त्वमसि' इति वाक्यस्य, त्वं तन्नियम्योऽसि, तत्सदृशोऽसीति वाक्याऽर्थ इति चेन्न, त्वदभ्युपगतैकपदलक्षणाया अपि जहल्लक्षणात्वेनाऽस्मदभिमतपदत्रयलक्ष-णाऽपेक्षया जघन्यत्वात्। तथाहि - अजहल्लक्षणायां न सर्वाऽऽत्मना स्वार्थत्यागः, न वाऽस्वार्थपरिग्रहः, किन्तु वाच्यैकदेशस्य प्रकृतेऽनन्वया-दतात्पर्यविषयत्वाच्च त्यागमात्रम्। तथा चेयं लक्षणा शक्तिसमकक्षेति

त्वदभ्युपगतैक-पदलक्षणाऽपेक्षया लघीयसी। न चाऽसिपदे तवाऽपि जहल्लक्षणैवेति वाच्यम्, तत्राऽपि वाच्यकोटिप्रविष्टाऽस्तित्वस्य ब्रह्मरूपतया तत्त्वमादिपदादविशेषात्। तस्मात्सर्वपदल-क्षणाऽपीयं त्वदभ्युपगतलक्षणाऽपेक्षया लघीयसीति वाक्यमखण्डार्थम्।

ननु वाक्ये ज्ञानस्य चिन्मात्रविषयकत्वे, ततोऽविद्या निवृत्तिर्न स्यात्, सप्रकारकज्ञानस्यैवाज्ञाननिवर्तकत्वात्। अन्यथा घटनिर्विकल्पकादपि घटाऽज्ञाननिवृत्त्यापत्तेरिति चेन्न। समानविषयनिश्चयस्यैवाऽविद्यानिवर्तकत्वात्। न चैवं निर्विकल्पकादप्यज्ञाननिवृत्त्यापत्तिः, शब्दनिर्विकल्पकादेव ब्रह्माऽज्ञाननि-वृत्तेरभ्युपगमेनेष्टाऽऽपत्तेः। न चाऽशाब्दनिर्विकल्पकादपि तदापत्तिः, तादृशनि-र्विकल्पके प्रमाणाभावात्। न च विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वात्तत्सिद्धिः, विशेषणत्वविशेष्यत्वाऽभावत्वादिविशिष्टबुद्धौ व्यभिचारेण जनकत्वाऽसिद्धेः। न च पञ्च प्रकाराः पूर्वानुपस्थिता अपि भासन्ते नाऽन्ये इति वाच्यम्। पञ्चवदन्येषामिति भानसम्भवेनाऽप्रयोजकत्वात्। विशिष्टप्रत्यक्षस्य विशेषणसन्नि-कर्षमात्रसाध्यत्वात्। अन्यथा शाब्दज्ञाने, आनुमानिकज्ञाने, प्रत्यक्षविशेषादौ च क्लृप्तत्वेन यद्विशेषणयोरिति न्यायेन विशिष्टज्ञाने विशेष्यज्ञानस्याऽपि कारणत्वप्रसङ्गात्। न चाऽभावविशेष्यकबुद्धौ व्यभिचारान्न तस्य कारणता, अभावनिर्विकल्पकाऽभ्युपगमेन व्यभिचारपरिहारस्य सुकरत्वात्। न चाऽभावस्य सविकल्पकैकवेद्यता नियमः, अप्रयोजकत्वात्। वस्तुतस्तु विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वेऽपि न निर्विकल्पकसिद्धिः, घटत्वादेर्जन्मान्तराऽनुभूतस्य स्मरणरूपविशेषणज्ञानसम्भवात्। अभिनवदेवदत्तादिबोधस्त्वाद्यो जातिविशेष्यको व्यक्तिविशेषणक एवाऽस्तु। न चैवं व्यक्त्यंशे प्रकारस्य पूर्वमभानात्तन्निर्वि-कल्पकसिद्धिरिति वाच्यम्। तत्र रूपादेरेव प्रकारतया भानात्। रूपेऽपि जन्मान्तराऽनुभूतं रूपत्वादिप्रकारतया भासते इति न काऽप्यनुपपत्तिः। एवं सर्वत्र विशिष्टधीसम्भवे किं निर्विकल्पेन। जन्माऽन्तरीयसंस्कारादिकल्पनञ्च परस्याऽपि क्वचिदावश्यकम्, अन्यथेष्टसाधन-ताज्ञानाऽभावेन स्तनपाने प्रवृत्त्यनुपपत्तेः। यत्तु 'घटः' इत्येवंरूपविष-यिताविशेषशालिनि ज्ञाने घटत्वांऽशे किञ्चिद्धर्माऽप्रकारकं घटत्वज्ञानं कारणम्। अतएव 'सामग्रीद्वयसमाजाद्विलक्षणविषयिताद्वयशाली जातिमान् घटः' इत्याकारको बोध इति तदनुरोधेन निर्विकल्पकसिद्धिरिति। तन्न। एवं सत्यस्मदादीनां युधिष्ठिरादिपदेभ्यो युधिष्ठिरत्वादिप्रकारकबोधानापत्तेः। अस्माकं युधिष्ठिरत्वा दिनिर्विकल्पकाऽभावेन तादृशविशिष्टाऽनुभवाऽभावे



पदात्तादृशस्मर-णस्याऽप्यसम्भवात्। तदर्थञ्च प्रकाराऽन्तराऽनुसरणे किं निर्विकल्पेन। तस्मादशाब्दनिर्विकल्पके प्रमाणाभावान्न तस्मादज्ञाननिवृत्तिः।

नन्वेवमपि वाक्यस्याऽखण्डार्थत्वे वाक्यत्वमेव भज्येत। तथा हि - आकाङ्क्षा योग्यताऽऽसत्तिमत्पदकदम्बकत्वं वाक्यत्वम्। आकाङ्क्षादिकञ्चाऽ-न्वयस्यैव वाक्यार्थत्वे सङ्गच्छते। यस्य पदस्य येन पदेन विना यदन्वयाऽननुभावकत्वं तत्तेन साकाङ्क्षमित्यननुभावकत्वमेवाऽऽकाङ्क्षा। स्वप्रतिपाद्याऽन्वयाऽबाधो योग्यता। अन्वयप्रतियोग्युपस्थितिरासत्तिरिति तासाम-न्वयघटितत्वादिति चेन्न। यस्य पदस्य येन पदेन विना यदर्थाऽननुभावकत्वं साऽऽकाङ्क्षा। वाक्यार्थाऽबाधो योग्यता। अव्यवधानेन स्वार्थोपस्थितिरा-सत्तिरिति तासामन्वयाऽघटितत्वेनाऽन्वयाऽबोधकत्वेऽपि वाक्यत्वोपपत्तेः।

ननु तत्त्वमसीति वाक्ये त्वम्पदे लक्षणाऽस्तु, तस्याऽहङ्कारशबलचैतन्यवाचकत्वात् तत्पदे किमिति लक्षणा। तेन शक्त्यैव शुद्धस्योपस्थानसम्भवात्। न च तत्पदस्य बुद्धिस्थवाचकत्त्वाच्छुद्धस्य च कृत्स्नप्रकरणस्य तत्र तात्पर्यग्रहं विनाऽनुपस्थितेस्तत्प्रकरणाऽन्तर्गतत-त्त्वमसीतिवाक्यस्थतत्पदस्याऽपि शक्त्या विशिष्टोपस्थापकत्वमेवेति वाच्यम्। श्रवणेन शुद्धे तात्पर्यबोधाऽनन्तरं मननाऽऽद्युत्तरकालं यस्तत्त्वमस्यादिवाक्येन साक्षात्कार उत्पाद्यते, तदानीं शुद्धस्याऽपि बुद्धिस्थत्वेन तत्पदेन शक्त्येव तदुपस्थापनसम्भवे लक्षणावैयर्थ्यादिति चेन्न। सर्वनाम्नां बुद्धिस्थत्वविशि-ष्टवाचकत्वेन तत्पदेऽपि लक्षणाया आवश्यकत्वात्। अन्यथा सर्वनाम्नां नानार्थताऽऽपत्तेः। शक्यताऽवच्छेदकानां घटत्वादीनां नानात्वात्। न च घटत्वादीनां बुद्धिस्थत्वेनाऽनुगमान्न नानार्थतेति वाच्यम्। तथा सति नानाऽर्थोच्छेदप्रसङ्गात्। अश्वत्वलवणत्वादीनामपि बुद्धिस्थत्वेनाऽनुगमस्य कर्तुं शक्यत्वात्। तस्मात्सर्वनाम्नां बुद्धिस्थत्वप्रकारकज्ञानजनकत्वात्तत्पदेऽपि लक्षणा। तस्मात्सिद्धं तत्त्वमस्यादिमहावाक्यस्याऽखण्डार्थत्वम्।

एवं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्यवान्तरवाक्यमप्यखण्डाऽर्थम्। स्वरूपमात्रप्रश्नोत्तरत्वात्। प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्। ननु दृष्टान्तः साध्यविकलः, तथा हि अस्ति तावदस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः, स च न चन्द्रस्वरूपमात्रविषयकः, स्वरूपमात्रस्य चक्षुषैव निर्णयात्। किन्त्वसा-धारणधर्मविषयः, चन्द्रपदवाच्यत्वविषयो वा, अतद्व्यावृत्तिविषयको वेति

प्रकृष्टप्रकाश इत्युत्तरवाक्यस्याऽपि धर्मादिवैशिष्ट्यमेवाऽर्थ इति चेन्न। प्रकाशा-दिवैशिष्ट्यस्याऽपि तेन पूर्वमेव निर्णीतत्वात् चन्द्राऽसाधारणधर्मवान् चन्द्र इति जानामि, चन्द्रश्चन्द्रपदवाच्य इति च जानामि, चन्द्रोऽचन्द्राद्व्यावृत्त इत्यपि जानामि, चन्द्रस्वरूपमेव परं न जानामीति प्रश्नविवरणाच्च स्वरूपमात्रविषयक एव प्रश्नः। स्वरूपमपि चक्षुषा निर्णीतमिति चेन्न। तस्य ज्ञानस्याऽनवधारणाऽऽ-त्मकतया संशयनिवर्तनाऽसमर्थत्वात्। नन्वेवं धर्मादिविषयक एव प्रश्नोऽस्तु, तद्विषयकज्ञानस्याऽप्यनवधारणत्वेन तस्य प्रश्नविषयत्वोपपत्तेरिति चेन्न। चन्द्रस्वरूपमेव परं न जानामि तद्वदेति तदीयवचनेनैव तदीयप्रश्नस्य स्वरूपमात्रविषयत्वाऽवधारणात्। तस्मात्स्वरूपमात्रस्य पृष्टत्वात्तदुत्तरमपि स्वरूपमात्रविषयकमेव। अन्यथाऽऽम्रप्रश्ने कोविदारोत्तरवत्प्रश्नप्रतिवचनयो-र्वैयधिकरण्यप्रसङ्गात्। नन्वेवमपि प्रकृष्टप्रकाशादिपदैर्लक्षण्या स्वरूपमात्रबोधने कथं तस्मात्संशयनिवृत्तिः। अन्यथा यः कश्चिच्चन्द्र इति वाक्येनाऽपि स्वरूपे बोधिते ततोऽपि संशयनिवृत्तिः किन्न स्यादिति चेन्न। यदीयं व्यक्तिश्चन्द्रो न स्यात्तर्ह्याप्तः प्रकृष्टप्रकाशादिपदैर्लक्षणया नोपस्थापयेदित्यनुकूलतर्कसहकारेण स्वरूपमात्रगोचरज्ञानेनाऽपि संशयस्य निवर्तयितुं शक्यत्वात्। यः कश्चिदिति वाक्यश्रवणे चैतादृशतर्काऽनवतारात्ततः संशयाऽनिवृत्तेः। तस्मात्सिद्धं प्रकृष्टप्रकाश इति वाक्यस्य स्वरूपमात्रप्रश्नोत्तरत्वादखण्डार्थत्वम्।

तथा च तद्दृष्टान्तेन सत्यं ज्ञानमनन्तमित्यादि वाक्यमप्यखण्डार्थमेव।

तथा हि - 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे ब्रह्मज्ञानात्पुरुषाऽर्थ-श्रवणात्तद्ब्रह्म किमित्याकाङ्क्षायां प्रवृत्तमिदं वाक्यं तन्मात्रप्रश्नोत्तरमेव।

तथा चाऽत्रापि स्वरूपमात्रबोधाऽर्थं सर्वपदलक्षणा। ननु सत्यादिषु किमिति लक्षणा, ब्रह्मणः सत्यस्वरूपतया सत्यपदस्य ज्ञानादिस्वरूपतया ज्ञानादिपदानाञ्च तत्र शक्तेरेव सम्भवात्। ब्रह्माऽतिरिक्तस्य मिथ्यात्वेन जडत्वेन च सत्याऽऽदिपदवाच्यत्वाऽयोगेन ब्रह्मणोऽप्यवाच्यत्वे तेषां निरर्थकत्वप्रसङ्गाच्च। लक्षणाबीजाऽन्वयानुपपत्त्यभावाच्च। नीलमुत्पलमिति वाक्यइवाऽत्राऽपि सत्यत्वादिवैशिष्ट्यस्यैव वाक्यार्थत्वसम्भवात्। तस्मान्न लक्षणेति चेन्न। सत्यादिपदानां शुद्धब्रह्मवाचकत्वे तेषां पर्यायताऽऽपत्तेः। तथा च पर्यायाणां सहप्रयोगाऽनुपपत्तेः सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिरपार्थिकैव स्यात्। तथा च सत्यपदस्य बाधाऽयोग्यत्वरूपधर्मविशिष्टे चैतन्ये शक्तिः, ज्ञानपदस्य



चक्षुरादिजन्यवृत्तिविशिष्टे, अनन्तपदस्य त्रिविधपरिच्छेदशून्यत्वविशिष्टे, ब्रह्मपदस्य सर्वाऽऽत्मतायोग्यत्वविशिष्टे, एवं दोषाऽभावादिविशिष्टे शुद्धादिपदानामिति न केवलं ब्रह्मणि कस्याऽपि शक्तिः। न चाऽत्र सत्यस्य बाधाऽयोग्यत्वस्य सत्यपदवाच्यत्वम्, अज्ञानात्मिकाया वृत्तेर्ज्ञानपदवाच्यत्वम्। अत एव ब्रह्मादिरूपाणां ब्रह्मादिशब्दवाच्यत्वञ्च विरुद्धमिति वाच्यम्। त्वन्मतेऽ घटस्य घटत्वस्य घटशब्दवाच्यत्ववदस्याऽप्यविरुद्धत्वात्। न चाऽन्वयाऽनुपपत्त्यभावा-ल्लक्षणाऽनुपपत्तिः, तात्पर्याऽनुपपत्तेरेव लक्षणाबीजत्वस्य प्रागुपपादितत्वात्। न चाऽत्रासत्यत्वादिवैशिष्ट्यं वाक्यार्थः, स्वरूपमात्रस्य बुभुत्सिततत्वेन तस्यैव वाक्याऽर्थत्वात्। तस्माच्छुद्धं ब्रह्म सर्वपदाऽवाच्यम्।

ननु न ब्रह्म सर्वपदाऽवाच्यम्, वाच्यपदवाच्यत्वात्। न च तेनाऽपि लक्ष्यते, ब्रह्माऽतिरिक्तस्याऽवाच्यपदमुख्यार्थस्याऽभावेन लक्षणाऽनुपपत्तेरिति चेन्न। अवाच्यमित्यस्य वाक्यत्वेन पदत्वाऽभावात्। पदत्वे वाऽवाच्य-त्वधर्मविशिष्टस्यैव वाच्यत्वेन शुद्धस्याऽवाच्यत्वात्। नन्वेवमपि लक्ष्यपदवाच्यमेव ब्रह्म, शक्यसम्बन्धस्यैव लक्ष्यपदवाच्यताऽवच्छेदकत्वात्। तस्य च ब्रह्मण्यपि सत्त्वादिति चेन्न। तस्याऽपि यौगिकत्वेन वाक्यतुल्यत्वात्। तेनाऽपि लक्ष्यत्व-विशिष्टब्रह्मण एवाऽभिधानाच्च। एतेन निर्विशेषस्वप्रकाशनि-र्गुणादिशब्दानां ब्रह्मणि शक्तिः स्यादिति निरस्तम्। तस्मात्सिद्धं शुद्धे ब्रह्मणि न कस्याऽपि पदस्य शक्तिरिति। तथा च श्रुतिः ''यतो वाचो निवर्तन्ते'' इति।

न चाऽनया श्रुत्या लक्षणाऽपि निषिध्यते इति वाच्यम्। अस्याः श्रुतेः पूर्वोक्तन्यायसिद्धार्थाऽनुवादितया शक्तिमात्रनिषेधद्वारा निर्गुणब्रह्मपरत्वात्। अन्यथा ''तत्त्वौपनिषदं पुरुषं पृच्छामि'' इत्यादिश्रुतिसिद्धौपनिषदत्वबाधप्रसङ्गात्। वृत्तिमात्र-निषेधे तया विना शब्दस्य बोधकत्वाऽयोगात्। न च ''वचसा वाच्यमुत्तमम्'' इति माध्वोदाहृतश्रुतिविरोधः, तस्याः श्रुतित्व एव विप्रतिपत्तेः। अस्तु वा श्रुतित्वं, तावताऽपि शुद्धे शक्तिरिति कुतः? विशिष्टशक्ति-प्रतिपादनेनाऽप्येतस्य वचनस्य चरितार्थत्वात्। अन्यथा पर्यायताऽऽपत्तेरुक्त-त्वाच्च। तस्माच्छक्तेरेव मुख्यप्राप्तित्वाल्लक्षणायाश्चाऽर्थद्वारकप्राप्तित्वेन गौणत्वा-न्मुख्याऽप्राप्तिरेव यतो वाच इति श्रुत्या निषिध्यत इति।

स्यादेतत्, ब्रह्मणः सत्याऽऽदिपदलक्ष्यत्वे गङ्गापदलक्ष्यस्याऽगङ्गा-त्ववत्सत्यादिपदलक्ष्यस्याऽसत्यत्वाद्यापत्तिः। तथा च न ब्रह्मणः सत्यज्ञानान-

न्दात्मत्वम्, नवाऽद्वैतमिति साधु समर्थितो ब्रह्मवादः।

किञ्च सर्वपदलक्षणापक्षे पदाऽन्तरमपि व्यर्थम्, एकेनैव पदेन सत्यज्ञानानन्दात्मकस्य ब्रह्मणो लक्षिततत्वात्। तस्मान्न सर्वपदलक्षणा, नवाऽखण्डार्थतेति चेन्न। सत्यादिपदेन विशिष्टवाचिनाऽमत्याऽनानन्दा-दिरूपविशेषणत्यागपूर्वकं वस्तुतः सत्या-दिस्वरूपस्यैव लक्षिततत्वेन सत्यादिपदलक्ष्यस्यापि सत्याद्यात्मत्वोपपत्तेः। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदलक्ष्यस्याप्यकाकत्वाभाववदानन्दपदलक्ष्यस्याप्यनानन्दत्वाऽभावोपपत्तेश्च। दृष्टान्ते तु जहल्लक्षणाऽभ्युपगमात् तत्र च वाच्यं गङ्गास्वरूपं मुख्यं परित्यज्याऽगङ्गात्मकतीरस्यैव लक्षिततत्वेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। यत्तु पदान्तरं व्यर्थं, तन्न। ज्ञानाऽदिपदैरज्ञानात्मकवृत्तित्यागपूर्वकं स्वरूपाऽनुपस्थापने ब्रह्म ज्ञानस्वरूपं न वाऽऽनन्दस्वरूपं नवेत्यादि संशयाऽनिवृत्तेः। तस्मात्सत्या-द्यात्मकमपि ब्रह्म सत्यादिपदलक्ष्यमिति। सिद्धम्।

नन्वेवमपि शक्यसम्बन्धितया ज्ञाते शुद्धे लक्षणा वाच्या। शक्यसम्बन्धितया ज्ञानं च न प्रमाणान्तरेण, ब्रह्मण औपनिषदत्वात्। तथा च लक्ष्यं किमिति शिष्येण गुरुं प्रति पृष्टे सति तच्छब्दान्तरेण बोधनीयं गुरुणा, सोऽपि शब्दो लाक्षणिकश्चेत्तत्राऽपि लक्ष्यं किमिति पृष्टे शब्दाऽन्तरेणैव वक्तव्यम्। सोऽपि शब्दो लाक्षणिकश्चेदनवस्थेति श्रान्तस्य गुरोरपि मूकता। शिष्यस्य लक्ष्यस्य स्वरूपाऽप्रतिपत्तिश्चेति सम्यग्व्युत्पादितं वेदान्तरहस्यमिति चेन्न। शुद्धस्य स्वप्रकाशत्वेनोपस्थितत्वाच्छक्यसम्बन्धग्रहोपपत्तेः।

अथवा तर्काच्छुद्धोपस्थितिः। तथाहि सत्याऽऽदिपदानि विशिष्टवा-चकानि, विशिष्टानाञ्च समानसत्ताकभेदवत्त्वादभेदो बाधितः। समानाधिकरणप-दानाञ्चैकस्मिन्प्रातिपदिकार्थे तात्पर्यम्। ब्रह्माऽतिरिक्तञ्च मिथ्यात्वान्न तत्त्वावेदकश्रुत्या तात्पर्यतः प्रतिपाद्यमिति गुरुणा व्युत्पादितस्य शिष्यस्य सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यं श्रुतवतः यदि सत्यादिपदवाच्यसम्बन्धिज्ञानादिरूपमेकं वस्तु न भवेत्तर्हि सत्यादिपदानां सामानाधिकरण्यं वाक्यस्यैकार्थपरत्वञ्च बाधितं स्यादिति तर्केण वाच्यसम्बन्धितया शुद्धोपस्थितिसम्भवात्। तस्मात्सत्यादिप-दलक्षणायां न काऽप्यनुपपत्तिः।

स्यादेतत्। सर्वपदलक्षणापक्षे वाक्यमबोधकमेव स्यात्, लाक्षणिकपदा-नामननुभावकत्वात्। नह्यशक्तस्य बोधजनकत्वं सम्भवति, सर्वत्र शक्तस्यैव



कार्योत्पादकत्वादिति चेन्न। लाक्षणिकस्याऽननुभावकत्वे यत्र कमले लक्षणया द्विरेफ शब्दः प्रयुक्तः, नीलं द्विरेफमानयेत्यादौ तत्र शाब्दबोधो न स्यात्। तत्र नीलद्विरेफशब्दयोर्लाक्षिणिकतया स्वार्थाऽन्वयबोधकत्वाऽसम्भवात्।

किञ्चैवं प्राशस्त्यबोधकाऽर्थवादवाक्यानामप्यबोधकताऽऽपत्तिः। तत्र सर्वैः पदैर्लक्षणया प्राशस्त्यस्योपस्थापनात्।

वस्तुतस्तु पदार्थोपस्थापकपदत्वेनैव शाब्दबोधजनकत्वं, न तु तच्छक्तपदत्वेन गौरवात्। नानार्थस्य वस्तुतस्तत्र शक्तस्याऽपि शक्त्यग्रहदशायां तदनुपस्थापकतयाऽननुभावकत्वाच्च, सहश्रुतपदानां सम्भूयानुभावकत्वव्यु-त्पत्तेश्च। तस्माल्लाक्षणिकं नानुभावकमिति प्रक्रियामात्रम्। तस्माद्युक्तमेव सत्यादिवाक्यानां लक्षणयाऽखण्डार्थत्वम्।

ननु सत्याद्यवान्तरवाक्यस्याऽप्यखण्डचिन्मात्रबोधकत्वे किं तत्त्वमस्या-दिमहावाक्येन, तद्बोध्यचिन्मात्रस्याऽवान्तरवाक्यैरेव बोधितत्वात्। न च भेदभ्रमो महावाक्योत्थज्ञानं विना न निवर्तते इति वाच्यम्, अद्वितीयब्रह्मस्वरूपाऽवगमे सत्याऽऽदिवाक्यान्निष्पन्ने सति तदयोगात्। तस्मादवान्तरवाक्यस्याऽप्यखण्डार्थत्वे महावाक्यवैयर्थ्यं दुष्परिहरमिति चेन्न। अवान्तरवाक्यानां महावाक्यशेषतया तेषां पदार्थमात्रतात्पर्यकत्वेन जीवब्रह्माभेदस्य ततोऽवगमेऽपि तत्र तस्य तात्पर्याऽ-भावात्। अन्यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो जयेत' इत्यादिवाक्यानामपि वैयर्थ्यप्रसङ्गात्। 'सर्वेभ्यो ज्योतिष्टोमः' सर्वेभ्यो दर्शपूर्णमासौ, 'सर्वेभ्यश्चातुर्मास्यानि' इति वाक्येन तेषां सर्वफलकत्वे बोधनात् सर्वमध्ये स्वर्गस्याऽप्यन्तर्भूतत्वात्। यदि च ज्योतिष्टोमेनेत्यादिवाक्यसार्थक्यार्थमेव 'सर्वेभ्यो ज्योतिष्टोमः' इत्यत्र सर्वपदस्य सङ्कोचं कृत्वा स्वर्गाऽतिरिक्तसर्व-फलकत्वबोधने तात्पर्यं कल्प्यते, तदा प्रकृतेऽपि तुल्यम्। तस्मादवा-न्तरवाक्यैर्विदिततत्त्वम्पदार्थ स्याऽधिकारिणस्तत्त्वमस्यादिवाक्योत्थसाक्षात्कारे-णादिविद्यानिवृत्तिर्जायते। तदुक्तं भगवता नारदेन - 'तत्त्वमस्यादिवाक्योत्थज्ञानं मोक्षस्य साधनम्। ज्ञाने त्वनाहते सिद्धे सर्व ब्रह्ममयं भवेत्' इति।

ननु कथं शब्दात्साक्षात्कारः, शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यात्। अन्यथाऽनुमानेनाऽपि

साक्षात्कारोत्पत्तिप्रसङ्गात्। तस्मादिन्द्रियजन्यज्ञान एवाऽप-रोज्ञत्वमिति न शाब्दाऽपरोक्षमिति चेन्न। न तावदिन्द्रियजन्यत्वं ज्ञानस्याऽपरोक्षत्वं, सुखादिज्ञाने तदभावप्रसङ्गात्। तस्य केवलं साक्षिभास्यत्वस्य प्रागुक्तत्वात्। परपक्षे ज्ञानमात्रस्याऽपरोक्षताऽऽपत्तेश्च। जन्यज्ञाने सर्वत्र मनसः कारणत्वात्तस्य चेन्द्रियत्वात्। न चेन्द्रियत्वेन तस्य सर्वत्र जनकत्वं नास्तीति वाच्यम्। इन्द्रियत्वस्य गुरुतया कारणताऽनवच्छेदकत्वात् चक्षुष्ट्वादेरेव तथात्वात्। नाऽप्यपरोक्ष-त्वाज्जातिः। तस्याः वृतिनिष्ठत्वे सुखादेः शुक्तिरजतादेश्चाऽपरोक्षता न स्यात् तस्य केवलं साक्षिभास्यत्वात्। साक्षिनिष्ठत्वे चाऽज्ञाततया तद्भास्यविप्रकृष्टघटा-देरप्यपरोक्षार्थविषयकत्वमेव वृत्तेरपरोक्षत्वम्। अर्थस्य चाऽपरोक्षत्वमनावृतसा-क्षितादात्म्यं, संविदस्तु स्वरूपमेव तत्। ''तत्साक्षादपरोक्षाद् ब्रह्म'' इति श्रुतेः। साक्षादितिपदेन घटादितुल्यता-व्यावर्तनात्। तस्माद् ब्रह्मणः स्वत एवाऽपरोक्षत्वात्तद्विषयकं ज्ञानं शब्दजन्यमप्यपरोक्षार्थविषयकत्वादपरोक्षमिति सिद्धं शाब्दापरोक्षम्।

नन्वेवमनुमितेरप्यपरोक्षताऽऽपत्तिः। त्वदुक्तप्रकारेण तत्राऽप्यपरोक्ष-तासम्भवादिति चेन्न। चैतन्यांशेऽपरोक्षत्वस्येष्टत्वात्। यत्र चक्षुःसन्निकृष्टपर्वतादौ वह्न्याद्यनुमितिस्तत्र पर्वताद्यंशेऽप्यरोक्षत्वस्येष्टत्वात्। न च प्रत्यक्षत्वाऽनुमिति-त्वजात्योः सङ्करः, सिद्धान्ते प्रत्यक्षत्वस्य जातित्वाऽनभ्युपगमात्। अतएव दीर्घशष्कुलीभक्षणादौ रूपरसादिविषयकं पञ्चेन्द्रियजन्यमेकमेव ज्ञानमिति सिद्धान्तः। तत्र ज्ञानभेदकल्पने प्रमाणाऽभावात्। तदुक्तं नृसिंहाश्रमगुरुचरणैः - ''पञ्चेन्द्रियाणां युगपन्निजाऽर्थयोगे तदर्थेषु मितिः कथं न। मनोऽणुतायां किमपि प्रमाणं न वा तदर्थप्रमितिप्रभेदे'' इति। किं बहुना, सर्वा अपि वृत्तयश्चैतन्यांऽशेऽपरोक्षा एव, अत एव सकलप्रमाणगोचरं ब्रह्मेति सिद्धान्तः।

नन्वौपनिषदत्वविरुद्धोऽयं सिद्धान्त इति चेन्न। मानाऽभावप्रयुक्ताऽसत्त्व-शङ्का येन यत्र व्यावर्त्यते तदेव तत्र मानमिति व्यवह्रियते। घटाऽऽद्याकारा वृत्तिर्यद्यपि घटाऽवच्छिन्नचैतन्यं विषयीकरोति, तथाऽपि ब्रह्म चित्स्वरूपं न वा, आनन्दरूपं न वेत्यादिसंशयनिवर्तनेऽसमर्थेति सा तत्र मानमिति नोच्यते। सत्यादिवाक्योत्था वृत्तिस्तु ब्रह्मविषयकं संशयं निवर्तयतीति सत्यादिवाक्यमेव तत्र मानमित्यौपनिषदं ब्रह्मोच्यते।

अथवा तत्रत्यपदार्थावच्छिन्नस्य सकलप्रमाणगोचरत्वं, शुद्धस्य त्वौपनिषदत्वमिति न सिद्धान्तयोः परस्परविरोधः।





नन्वेवमपि तत्त्वमसीत्यादिवाक्यात्कथं शाब्दो बोधः, शाब्दे बोधे तात्पर्य-ज्ञानस्य कारणत्वात्। तात्पर्यञ्च तत्प्रतीतीच्छयोच्चरितत्वम्। तच्च त्वन्मते वेदे न सम्भवति, तस्य त्वया निश्वसिताऽऽदिश्रुत्यनुरोधेनाऽपौरुषेय-त्वाऽभ्युपगमात्। अपौरुषेयत्वञ्च न पूर्वमीमांसकमत इवेश्वराऽप्रणीतत्वम् ''ऋचः सामानि जज्ञिरे'' इत्यादि श्रुतिविरोधात्। किन्तूद्दिश्य रचितत्वाऽभाव एवेति त्वदाचार्यैर्व्यवस्थापितत्वादिति चेत्, उच्यते। फलवत्प्रतीत्यनुकूलत्वन्तात्पर्यं, स च शब्दस्यैव धर्मः, स चोपक्रमोपसंहारादिभिर्निर्णीयते। तदुक्तम् - ''उपक्रमोप-संहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये'' इति। एतच्च तात्पर्यं वेदस्याऽपौरुषेयत्वेऽपि सम्भवतीति तत्त्वमस्यादिवाक्याच्छाब्द-बोधोत्पत्तौ न काऽप्यनुपपत्तिः।

वस्तुतस्तु शाब्दे बोधे तात्पर्यज्ञानङ्कारणमेव न भवति, प्रमाणाऽ-भावात्, व्यभिचाराच्च। रुद्ररोदनादिप्रतिपादकवाक्यानां स्वार्थे तात्पर्यं नास्तीति ''तात्पर्यन्तु न जानामि'' इत्यादि व्यवहारदर्शनात्। न चैवं 'अयमेति पुत्रो राज्ञः' 'पुरुषोऽपसार्यताम्' इति वाक्ये राजपदस्य पुत्रपुरुषाऽन्यतराऽन्वयतात्पर्य-संशयदशायामपि शाब्दज्ञानप्रसङ्ग इति चेन्न। तात्पर्यज्ञानस्य कारणत्वं वदताऽपि समभिव्याहृतपदानामेकवाक्यताज्ञानं शाब्दबोधे कारणमिति वक्तव्यमेव। अन्यथा 'गङ्गायां घोषः, इत्यत्र नीरतीरपदयोरध्याहारेणाऽपि शाब्दबोधोपपत्तेर्नियमेन तीरे लक्षणाकल्पनं न स्यात्। तथा च प्रकृते राजपदस्य पुरुषादिपदेन सहैकवाक्यताज्ञानाऽभावादेव शाब्दज्ञानविरहो न तु तात्पर्यज्ञान-विरहात्।

नन्वेकवाक्यताज्ञाने विद्यमानेऽपि तात्पर्याऽनिश्चये क्वचित्संशयो दृश्यते यथा - 'हस्तेन दीर्घेण कुठारेण वृक्षं छिनत्ति' इत्यादौ किं हस्तः कुठारो वा दीर्घ इति। तथा च तत्र तात्पर्यनिश्चयस्य कारणत्वे एकत्र क्लृप्तत्वेन शाब्दज्ञानमात्रे तस्य कारणतेति चेन्न। तत्राऽपि तात्पर्यनिश्चयात्पूर्वमेवोभयत्राऽपि दीर्घत्ववैशि-ष्ट्याऽवगाहिशाब्दो बोधो जायत एव, पश्चात्परं तात्पर्यसंशयरूपदोषात्संशयः। त्वयाऽप्युभयत्र तात्पर्यनिश्चये सत्युभयत्र दैर्घ्यवैशिष्ट्याऽवगाही बोधो जायतएवेत्यभ्युपगमात्।

ननु निश्चिते कथं संशय इति चेन्न। प्राथमिकज्ञानस्याऽऽपातरूपतया संशयाऽविरोधित्वात्। प्रमेय इति निश्चितेऽपि घटे परेणाऽपि संशयाऽभ्युपगमाच्च। न च घटत्वप्रकारकं ज्ञानं घटो न वेति संशयविरोधि, इदञ्च

न तथेति वाच्यम्। प्रमेयमिति ज्ञानस्याऽपि घटत्वप्रकारकत्वात्। भासमानवैशिष्ट्यप्रतियोगित्वस्यैव प्रकारत्वात्। न च सामान्यधर्माऽप्रकारकं ज्ञानं संशयविरोधि, इदञ्च न तथेति वाच्यम्। प्रमेयो घट इति ज्ञानादपि तदनिवृत्त्यापत्तेः। न चेदमपि घटत्वाद्यंशे सामान्यधर्माऽप्रकारकमेवेति वाच्यम्, प्रमेयघटत्ववानयमिति ज्ञानाद् घटो नवेति संशयनिवृत्त्यनापत्तेः। तस्य घटत्वांऽशे सामान्यधर्मप्रकारकत्वात्।

नन्वेवमप्यनेकार्थशब्दप्रयोगे युगपत्तावत्पदार्थसंसर्गबोधो न जायत इति सर्वं सम्प्रतिपन्नम्। तत्र च तात्पर्यज्ञानाऽतिरिक्तसामग्रीसत्त्वात्तद्विरहादेव शाब्दबोधविरहः। तत्रैव क्लप्तत्वात् तस्य सर्वत्र कारणतेति चेन्न। अनेकार्थपदाद्युगपत्सकलपदार्थस्मृतौ प्रमाणाऽभावात्। भावे वा भवत्येवाऽन्वयबोधः। तात्पर्यग्रहे सति तावत्पदार्थाऽन्वयबोधस्य त्वयाऽप्यभ्यु-पगमात्। तस्मात्तात्पर्यज्ञानं न शाब्दबोधे कारणमिति सिद्धम्। नन्वेवं किं श्रवणेन, तथा हि – श्रवणं नामाऽद्वितीये ब्रह्मणि वेदान्ततात्पर्याऽवधारणाऽनुकूले व्यापारः। स च तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वएवोपयुज्यते, नाऽन्यथा। तथा चैकं संधित्सतोऽपरं प्रच्यवते इति न्यायाऽऽपातइति चेन्न। तात्पर्यविपर्ययस्य तत्संशयस्य च दोषतया शाब्दभ्रमोत्पादकत्वेन तन्निवर्तकतया श्रवणस्य सार्थकत्वात्। तस्मात्तात्पर्यज्ञानस्य शाब्दबोधाऽहेतुत्वेऽपि न श्रवणादिवैयर्थ्यम्।

एवमाकाङ्क्षायोग्यताऽऽदिज्ञानानामपि न शाब्दबोधकारणता, प्रमाणाऽभावात्। यत्तु गुणाऽनुरोधेन योग्यताज्ञानं कारणमिति, तन्न। असति दोषे चक्षुरादिनैव प्रमोत्पत्ति-सम्भवेन तस्यां गुणस्याऽहेतुत्वात्। स्वरूपसत्या योग्यताया एव गुणत्वसम्भवेन गुणतयाऽपि तज्ज्ञानस्य कारणत्वे प्रमाणाऽभावाच्च।

वस्तुतस्तु शाब्दे बोधे न स्वरूपसती योग्यता न वा तज्ज्ञानङ्कारणम्, योग्यताविरहेऽयोग्यतानिश्चिये विद्यमानेऽपि शाब्दबोधदर्शनात्। तथा हि – ''अस्य क्षोणिपतेः परार्धपरया लक्ष्यीकृताः सङ्ख्या, प्रज्ञाचक्षुरवेक्ष्यमाण-तिमिरप्रख्याः किलाऽकीर्तयः। गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्मू-कानाम्प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि।

''एष वन्ध्यासुतो याति खपुष्पकृतशेखरः''। इत्यादिपद्येभ्यः प्रतीतिस्तावदुत्पद्यत एव, परन्तु विषयाऽसत्त्वान्निर्विषयिणी सा। यत्त्वत्र सुचेतसां मूकतैवोचितेति, तत्स्वात्मनोऽपि प्रतारणम्। तथा हि – अत्र मूकतेति वदन्तः



प्रष्टव्या किं शब्दे मूकता उताऽर्थे। नाद्यः, शब्दप्रयोगस्य भवद्भिरपि क्रियमाणत्त्वात्। नाऽन्त्यः, अर्थस्यैवाऽबोधे अत्र मूकतेति परबोधनाऽसम्भवात्। न हि स्वयं तमर्थं न जानात्येव, परस्य तु तत्र मूकतां व्युत्पादयतीति सम्भवति। तस्मादेतादृशवाक्यादपि ज्ञानमुत्पद्यत एव। तदुक्तं शाब्दमर्यादाविद्भिः – ''अत्यन्ताऽसत्यपि ज्ञानमर्थे शब्दः करोति हि'' इति। तस्माद्योग्यतादिज्ञानं शाब्दबोधे न कारणमिति सिद्धम्।

तथाच सुष्ठूक्तम् – 'तत्त्वमस्यादिवाक्योत्थसाक्षात्कारादविद्यानि-वृत्तिऽर्जायते' इति। सा चाऽविद्यानिवृत्तिरधिष्ठानात्मिकैव न ततोऽतिरिक्ता। तदुक्तं स्कान्दे – ''विद्य-यापरयाऽविद्यानिवृत्तौ ब्रह्म केवलम्। शिष्यते खलु नाऽभावो भावो वाऽन्यस्तथैव च'' इति। नन्वेवं तस्यास्तत्त्वज्ञानसाध्यत्वाऽनुपपत्तिः, अनादिपदार्थस्य साध्यत्वाऽयोगादिति चेन्न। परमतेऽनादिसिद्धस्याऽपि विघ्नप्रागभावस्य मङ्गलसाध्यत्ववत्, अनादिसिद्धस्याऽपि दुःखप्रागभावस्य प्रायश्चित्तसाध्यत्ववच्च, माध्वमते स्वरूपाऽऽत्मिकाया अप्यानन्दाऽभिव्यक्ते-र्नारायणप्रसादसाध्यत्ववच्चाऽनादिसिद्धाया अप्यविद्यानिवृत्तेः प्रवृत्त्यङ्गसाध्यत्व-सम्भवात्। तथा हि – साध्यत्वेन यदभिमतं तन्निरूपितप्रतियोग्यनु-योगिभावरूप-सम्बन्धाश्रयो यः प्रागभावः, तन्नाशकस्वस्वा-ऽभावव्याप्येतरसकलसमवधाने सति यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं, यद्व्यतिरेके चाऽसत्त्वं, तत्तस्य साध्यम्। दण्डसाध्ये घटे चैतदेवमनुवर्तनीयम्। साध्यत्वेन यदभिमतं घटः, तन्निरूपितप्रतियोग्यनुयोगिभावरूपसम्बन्धाश्रयो यः प्राणभावो घटप्रागभावः तन्नाशकं यद्दण्डतद्व्याप्येत-रत्सकलं कुलालादि, तत्समवधाने सति दण्डे सत्यग्रिमक्षणे घटसत्त्वं, दण्डव्यतिरेके च घटाऽसत्त्वं तद् घटस्वरूपं दण्डसाध्यमिति। रासभसाध्यत्वन्तु नाऽस्ति, रासभव्यतिरेके घटव्यतिरेकाऽ-भावात्। एवं मङ्गलसाध्यविघ्नप्रागभावेऽप्येतत्साध्यत्वमक्षतम्। तथा हि – साध्यत्वेन यदभिमतं, विघ्नप्रागभावः, तन्निरूपितप्रतियोग्यनु-योगिभाव-रूपसम्बन्धाश्रयो यः प्रागभावो विघ्नप्रागभाव एव, तन्नाशकमङ्गल-मङ्गलाभाव तद्व्याप्येतरसकल-समवधाने सति मङ्गलसत्त्वे विघ्नप्रागभावसत्त्वं, मङ्गलाभावे तदभाव इति विघ्नप्रागभा-वोऽपि मङ्गलसाध्यः। एवं तत्त्वज्ञानसाध्याऽविद्या-निवृत्तावपि योजनीयम्। तथा हि साध्यत्वेन यदभिमतमधिष्ठानाऽत्मकम-विद्यानिवृत्तिस्वरूपं, तन्निरूपितप्रतियोग्यनुयोगि-भावरूपसम्बन्धाश्रयो यः प्रागभा-वोऽविद्यारूपः, तन्नाशकं यत्तत्त्वज्ञानं

तद्व्याप्येतरत्सकलं कालादि, तत्समवधाने सति तत्त्वज्ञाने सत्यग्रिमक्षणेऽविद्याःनिवृत्तेः सत्त्वं, तत्त्वज्ञानव्यतिरेके चाऽविद्या-निवृत्तेरभावोऽविद्यैव, तन्निवृत्तिस्वरूपं तत्त्वज्ञानसाध्यमिति।

न च तत्त्वज्ञाने सत्यग्रिमक्षण एव दुर्लभस्तेन सर्वस्य निवृत्तिरिति वाच्यम्, वृत्तेरेव क्षणत्वात्। न चाऽविद्यायाः प्रागभावत्वाऽनुपपत्तिः, अनादिकादाचित्काऽभावत्वस्यैव प्रागभावत्वेनाऽविद्याया अपि तत्सम्भवात्। नन्वेवमविद्यानिवृतेर्घटादिसाध्यत्वमपि स्यात्। तथा च मुमुक्षोस्तत्त्वज्ञानोद्देशेन श्रवणादाविव घटाद्युद्देशेनाऽपि प्रवृत्तिः स्यादिति चेन्न। यस्मिन्सतीत्यत्र यस्मिन्ननन्यथासिद्धे सतीत्यस्य विवक्षितत्वात्। घटादेश्चाऽन्यथासिद्धत्वात्। तथा हि - 'तरति शोकमात्मवित्' 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुत्या ज्ञानस्याऽवश्य-कल्प्यत्वे तत्सहभूतं घटाऽऽद्यन्यथासिद्धम्। न चैवं कालादेरप्यन्यथासिद्धत्वेन स्वेतरसकलसमवधासतीत्यत्र सकलपदार्थाऽसिद्धिः, 'धर्माऽधर्मौ न सन्देहः सर्वकार्येषु कारणम्। उपभोगनिमित्तं हि देहाद्देहाऽन्तरागमः' इति विष्णुपुराणात्। 'सरितः सागराश्चैव भावाऽभावौ च पन्नग। सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः' इति महाभारतात्। 'कालेन जातो विकृतो विनश्यति कालं प्रतीच्छन् विमदो विमत्सरः। इत्यादिस्मृत्यनुरोधेन कालादेरपि कारणत्वात्। न चैवं ''नान्यः पन्था विद्यतेऽयनाय'' इति श्रुतिविरोधः, विशेषविषयकाऽऽचारेण स मान्य स्मृतेरिव विशेषविषयकस्मृत्या सामान्यश्रुतेरपि सङ्कोचस्य न्याय्यत्वात्। तस्मादधिष्ठानात्मिकाया अप्यविद्यानिवृत्तेः साध्यत्वमुपपन्नम्। वस्तुतस्तु अनन्यथासिद्धे यस्मिन्सति यत्सत्त्वं तत्तत्साध्यम्। तथा चाऽनन्यथासिद्धतत्त्व-ज्ञानोत्तरकालीनाऽविद्यानिवृत्तिरपि तत्साध्येति सर्वमनवद्यम्।

अथवा ऽविद्यानिवृत्तिरतिरिक्तैव, सा च पारमार्थिकी, नेह नानाऽस्ती-त्यादिश्रुत्या तात्पर्यतः प्रतिपाद्यमानायास्तस्याः मिथ्यात्वाऽयोगात्। न चैवमद्वैतभङ्गः भावाऽद्वैताऽभ्युपगमात्। 'तरतिशोकमात्मवित्' इत्यादिश्रुतिप्रामाण्याऽ-नुरोधेन तत्त्यैव न्याय्यत्वात्। न च तस्याः दृश्यत्वेन मिथ्यात्वमावश्यकम्, दृश्यभावत्वस्यैव मिथ्यात्वव्याप्यत्वात्। न च दृश्याऽध्यासमन्तरेण दृश्यत्वाऽ-नुपपत्तिः, दृशा सह स्वरूपसम्बन्धेनाऽपि तदुपपत्तेः। न चैवं वियदादेरपि स्वरूपसम्बन्धेनैव दृश्यत्वोपपत्तौ मिथ्यात्वं न सिद्ध्येदिति महत्सङ्कटमिति वाच्यम्। अनुकूलतर्काऽनन्तरोपष्टब्धश्रुत्यादिबलात्तत्सिद्धेः। केवलतर्केण पदार्थाऽसिद्धेः प्रागुक्तत्वात्। ''पाषण्डिनो विकर्मस्थान् बैडालव्रतिकान् शठान्।



हैतुकान् बकवृत्तींश्च वाङ्मात्रेणाऽपि नाऽर्चयेत्'' इति मनुना, 'चोद्यो न हेतुर्वेदार्थे चोद्यं कुर्वन् पतत्यधः। अतः सर्वम्परित्यज्य वेदमकं समाश्रयेत्' इति स्कान्दे 'अहमासं पण्डितको हैतुको वेदनिन्दकः। आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्।। हेतुवादान्प्रवदिता वक्ता संतत हेतुमत्। आक्रोष्टा चाऽभिवक्ता च ब्रह्मयज्ञेषु वै द्विजान्।। नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः। तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज'।। इति महाभारते च केवलं हैतुकत्वस्य निषिद्धत्वाच्च। यत्तु दृश्यभावत्वस्यैव मिथ्यात्वव्याप्यत्वे भेदेऽस्य मिथ्यात्वं न सिद्ध्येत्, तस्याऽभावरूपत्वादिति, तदस्मत्सिद्धान्ताऽनवबोधमूलकम् सिद्धान्ते पराऽभिमतविभागवद्भेदस्य भावरूपत्वात्। तथा च दृश्यभावत्वस्य तत्राऽपि सत्त्वाद् भेदस्याऽपि मिथ्यात्वम्। 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इत्यादिश्रुत्या, 'द्वौ सुपर्णौ शरीरेऽस्मिन् जीवेशाख्यो हृदि स्थितौ। तयोर्जीवः फलं भुङ्क्ते कर्मणो न महेश्वरः।। केवलं साक्षिरूपेण विना भोगं महेश्वरः। प्रकाशते स्वयं भेदः कल्पितो मायया तयोः।। इत्यादिस्मृत्या च स्पष्टं भेदस्य मिथ्यात्वाऽवधारणात्। तस्मादधिष्ठानादतिरिक्तैवाऽविद्यानिवृत्तिः। सा च तत्त्वज्ञानेनोत्पाद्यते, न चोपादानाभावात्तदुत्पत्त्यनुपपत्तिः, भावकार्यस्यैवोपादान-सापेक्षत्वात्। परेणाऽपि ध्वंसस्योपादानाऽनभ्युपगमादिति।

केचित्तु, अविद्यानिवृत्तिर्नाम निःस्वरूपतैव, सैव तत्त्वज्ञानसाध्या।

ननु केयं निःस्वरूपता नाम, ध्वंसः, अतिरिक्ता वा, नाऽऽद्यः पूर्वोक्तपक्षादविशेषात्। नान्त्यः, अनिर्वचनादिति चेदुच्यतेसत्यप्रपञ्चवादिनाऽपि ध्वंसाऽतिरिक्ता निःस्वरूपताऽवश्याऽभ्युपेया। अन्यथा घटध्वंसाऽनन्तरमपि घटोपलम्भः किमिति न भवेत्। घटस्य ध्वस्तत्वादिति चेन्न। ध्वंसो नाम पदार्थाऽन्तरमुत्पद्यतां नाम, तावता घटस्याऽनुपलम्भः कुतः। ननु तदानीं घट एव नास्ति, कस्योपलम्भ आपाद्यत इति चेन्न। घटो नास्तीति वचनस्य कोऽर्थः? किं घटो निःस्वरूपो जातः, उत तस्य ध्वंस उत्पद्यत इति। आद्ये स्वीकृतैव भवताऽपि निःस्वरूपता, अन्त्ये ध्वंसाऽऽख्यपदार्थाऽन्तरोत्पत्तावपि घटाऽनुपलम्भः कुतः? न ह्यन्योत्पत्त्याऽन्यस्याऽनुपलम्भः, घटोत्पत्त्या दण्डाऽनुपलम्भप्रसङ्गात्। ननु घटोपलम्भे ध्वंसः प्रतिबन्धक इति चेत् किं विद्यमानस्य घटस्य ग्रहे प्रतिबन्धकता, उताऽविद्यमानस्य? नाऽऽद्यः, ध्वंसकाले प्रतियोगिनो विद्यमा-नत्वाऽयोगात्। नाऽन्त्यः, निःस्वरूपताऽतिरिक्ताया अविद्यमानताया निर्वक्तुमशक्यत्वात्। ननु विद्यमानध्वंसप्रतियोगित्वमेव ध्वस्तस्याऽविद्यमान-

त्वमिति चेन्न। ध्वंसप्रतियोगित्वमपि किं विद्यमानस्य, उताऽविद्यमानस्य? नाऽऽद्यः, पूर्वोक्तव्याघातात्। नाऽन्त्यः, निःस्वरूपताऽतिरिक्ताऽविद्यमानताया निर्वक्तुमशक्यत्वात्। तस्मादवश्याऽभ्युपेयनिःस्वरूपतयैव ध्वस्त इति व्यवहारो-पपत्तौ किं ध्वंसाऽऽख्यपदार्थान्तरेण।

ननु बुभुत्सया पृच्छामः, केयं निःस्वरूपता नामेति चेत्, स्वरूपस्य तुच्छतैवेति परिभावयन्तु। तदुक्तं सिद्धान्तमुक्तावल्याम् – 'तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा। ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः' इति। तस्मादविद्यायास्तुच्छतैव तत्त्वज्ञानसाध्येति निरङ्कुशोऽद्वैतमेव परमार्थः। तदुक्तं स्कान्दे – ''परमाऽद्वैतविज्ञानमेव ग्राह्यं यथास्थितम् नाऽन्यतर्कैश्च हन्तव्यमि-दमाम्नायवाक्यजम्। द्वैतमेव हि सर्वत्र प्रवदन्ति हि केचन। न ते मनुष्याः कीटाश्च पतङ्गाश्च घटा हि ते''। इति। घटा इति। घटवदचेतना अतिमूढा इति भावः। तस्मात्सर्वथाऽप्युपपन्नमेतत्तत्त्वमस्यादिवाक्योत्थसाक्षात्कारेणाऽविद्यानिवृत्तिरिति।

तत्र वाक्योत्थसाक्षात्कारेणाऽऽवरकाऽज्ञानांऽशे निवृत्तेऽपि प्रारब्धेन प्रतिबन्धाद्विक्षेपशक्तिमदज्ञानांशो न निवर्तते, तथा च विक्षेपांऽशस्यऽऽदेहपात-मनुवृत्तेर्जीवन्मुक्तस्याऽपि भोग इति जीवन्मुक्तिप्रतिपादक-शास्त्रादभ्युपगम्यते। तथा च श्रुतिः – 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति। अस्या अर्थः – तस्य उत्पन्नसाक्षात्कारस्य चिदेककैवल्ये तावदेव चिरं तावानेव विलम्बः यावन्न विमोक्ष्ये यावत्प्रारब्धकर्मणः सकाशान्न विमोक्ष्यते, अथ संपत्स्ये अथ ब्रह्मसम्पन्नो भवतीति। स्मृतिरपि, – 'देहञ्च नश्वरमवस्थितमुच्छ्रितं वा सिद्धो न पश्यति यतोऽध्यगमस्वरूपम्। दैवादुपेतमुत दैववशादपेतं वासो यथा परिधृतं मदिरामदान्धः। देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः, इत्यादिका आवरणाऽभावं विक्षेपसद्भावञ्च दर्शयति निवृत्ताऽऽवरणतया देहाऽभिमानाऽभावात्तेन प्रारब्धाऽनुरोधेन निषिद्धाऽऽवरणेऽपि तस्य न पापं, न वा विहिताऽनुष्ठानेन पुण्यम्। तथा च श्रुतिः – ''यथा खलु पुष्करपत्रे नाऽऽपः श्लिष्यन्ति एवं हैवं विदित्वा पापं कर्म न श्लिष्यते'' इति। तथा पारमर्षं सूत्रमपि – 'तदधिगम उत्तरपूर्वाद्ययोरश्लेषविनाशौ तद्व्यपदेशात्' इति।

स्यादेतत्। प्रारब्धेन प्रतिबन्धाद्विक्षेपांऽशो न निवर्तत इत्ययुक्तम्। अनाद्यज्ञानेंऽशाऽभावात्। पश्चात्तन्निवृत्तिरप्यनुपपन्ना। वाक्योत्थज्ञानस्य पूर्वमेव





नष्टत्वात्। ज्ञानस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरदर्शनाच्चेति चेन्न। अनिर्वचनीयेऽ-ज्ञानेंऽशाऽभ्युपगमे बाधकाऽभावात्। माध्वैरनादेर्जीवस्याऽणु-परिमाणस्याऽप्यं-शाऽभ्युपगमाच्च। नैयायिकादिभि- राकाशादेरंशाऽनभ्युपगमे तत्राऽव्याप्यवृत्ति-घटादिसंयोगाऽनुपपत्तेश्च। न च वाक्योत्थज्ञाना ऽभावात्पश्चा-त्तन्निवृत्त्यनुपपत्तिः, स्त्रीशूद्रादीनां तदपेक्षाऽभावात्। तेन विनाऽपि पुराणादिश्रवणोत्थज्ञानेन, तत्राऽप्यनधिकारिणां भाषाप्रबन्धोत्थज्ञानेनाऽपि मोक्षसिद्धेः। तदुक्तं स्कान्दे – 'अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम्। वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम् ।। अन्येषामपि सर्वेषां ज्ञानाऽभ्यासो विधीयते। भाषाऽन्तरेण कालेन तेषां सोऽप्युपकारकः।।' इति। तेषां शास्त्रीयव्युत्पत्तेरभावात्। भावनादेर्बह्वायास-निवर्त्यत्वात् कालेनाप्यभिहितम्। येषान्तु वाक्योत्थज्ञानाऽपेक्षा, तेषां पूर्वमुत्पन्नेनैव ज्ञानेनाऽऽवरणस्य निवर्तितत्वान्निवृत्तावरणचैतन्यादेव प्रतिबन्धकनिवृत्तौ सत्यां तन्निवृत्त्युपपत्तेः। वृत्तेरज्ञाननिवर्तकत्वपक्षेऽपि पुनरपि तत्त्वमस्यादिवाक्योत्थज्ञान-कल्पने बाधकाऽभावात्। श्रुत्यादेः साधकस्योक्तत्वाच्च।

यत्तु ज्ञानकार्ये प्रतिबन्धो न दृष्ट इति, तन्न। ज्ञानकार्येऽपि प्रवृत्त्यादौ प्रतिबन्धदर्शनात्। श्रुत्यादिविरोधेनैतेषां कुतर्काणामाभासत्वाच्च। तस्मात्तत्वम-स्यादिवाक्यादुत्पन्नसाक्षात्कारादावरणशक्तिमदज्ञानांऽशस्य तत्स्थित्यधीन-स्थिति-कावरणस्य जन्मान्तरप्रापकप्रारब्धेतरकर्मणश्च निवृत्तौ सत्यां प्रारब्धाऽनुसारेण किञ्चित्कालं सशरीरो जीवन्मुक्तिमनुभूय भोगात्प्रारब्धनिवृत्तौ निवृत्ताऽऽवरणचैत-न्याद्वाक्योत्थवृत्त्या वा विक्षेपांशनिवृत्तौ सत्यां सच्चिदानन्दरूपं ब्रह्म प्रतिपद्यत इति सिद्धम्।

**अखण्डानन्दसद्बोधो वासुदेवो दयानिधिः**
**निरन्तरं हृदम्भोजे व्याजेनाऽनेन चिन्तितः।।**
**वाग्वेदी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा।**
**भट्टोजीभट्टसंज्ञं तं गुरुं नौमि निरन्तरम्।।**
**गुरूणां चरणाम्भोजकृपयाऽयं मया कृतः।**
**श्रीमत्तत्वविवेकाब्धेः सारोद्धारः सतां मुदे।।**

इतिश्रीमत्परमहंसपरिव्राजकाऽऽचार्यवर्यश्रमिदानन्दा-
श्रमचरणाऽरविन्दसेवापरायणेन रङ्गोजीभट्टेन
विरचितोऽद्वैतचिन्तामणिः समाप्तः।

* * *

# अद्वैतचिन्तामणौ प्रमाणतयोपन्यस्तानां श्रुतिस्मृतिपुराणादिवचनानां तत्तदुपलब्धाधारभूतमूलग्रन्थनिर्देशः।

(१) तत्त्वमसि। १, १७, ४३, २० (छान्दोग्योपनिषदि)

(२) सत्यं ज्ञानमनन्तं ब्रह्म। १, १७, ३९, २ (तैत्तिरीयोपनिषदि, ब्रह्मानन्दवल्ल्याम्)

(३) तद्विज्ञानार्थं स गुरु॰। ३, १७ (मुण्डकोपनिषदि, द्वितीयखण्डे)

(४) कच्चिन्न लौकायति॰ ४, ९ (रामायणेऽयोध्याकाण्डे)

(५) प्राचीनैर्व्यवहार॰ २०, ७ (सिद्धान्तलेशसङ्ग्रहे द्वितीयः श्लोकः)

(६) अत्रायं पुरुषः स्वयं ज्योतिः। २१, ६ (बृहदारण्यकोपनिषदि, तृतीये)

(७) न तत्र रथा॰ २३, १८ (बृहदारण्यके चतुर्थेऽध्याय, तृतीयब्राह्मणे)

(८) सुखमस्यात्मनो॰ २५, २३ (भागवते सप्त मस्कन्धे, त्रयोदश अध्याये षड्विंशः श्लोकः)

(९) इन्द्रियाणां हि चरतां॰ २८, १२ (भगवद्गीतायां द्विती येऽध्याये सप्तषष्टितमः श्लोकः)

(१०) कामः सङ्कल्पो विचिकित्सा॰ २७, १७ (बृहदारण्यकोपनिषदि पञ्चमब्राह्मणे)

(११) अजामेकाम्। ५४, ३ (श्वेताश्वतरोपनिषदि चतुर्थेऽध्याये)

(१२) दैवी ह्येषा॰ ३५, २५ (भगवद्गीतायां सप्तमेऽध्याये चतुर्थः श्लोकः)

(१३) अज्ञानेनावृतं ज्ञानं॰ ३६, १५ (भगवद्गीतायां पञ्चमेऽध्याये पञ्चदशः श्लोकः)

(१४) स्वप्ने सजीवः सुखदुःख॰ २३, २५ (आथर्वणकैवल्योपनिषदि)

(१५) इन्द्रो मायाभिः। ३७, १९ (बृहदारण्यकोपनिषदि पञ्चमब्राह्मणे)

(१६) पुंस्त्वादिवत्तस्य सतोऽभिव्य॰ ३८, १० (ब्रह्मसूत्रेषु द्वितीयेऽध्याये तृतीयपादे एकत्रिंशतमं सूत्रम्)



(१७) यतो वा इमानि भूतानि॰ ३९, ३ (तैत्तिरीयोपनिषदि भृगुवल्ल्यां प्रथमेऽनुवाके)

(१८) तदात्मानं स्वयमकुरुत। ४०, १२ (तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यां सप्तमेऽनुवाके)

(१९) अहं ब्रह्माऽस्मि। ४३, २२ (बृहदारण्यके चतुर्थब्राह्मणे)

(२०) एकः समस्तं यदिहा॰ ४३, २२ (विष्णुपुराणे षोडशेऽध्याये त्रयोविंश श्लोकः)

(२१) तदात्मानं स्वयमकुरुत। ४०, १२ (तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यां सप्तमेऽनुवाके)

(२२) अहं ब्रह्माऽस्मि। ४३, २२ (बृहदारण्यके चतुर्थब्राह्मणे)

(२३) देहं मनोमात्र॰ ४४, २ (भागवते ११ स्कन्धे २३ अध्याये ५० तमः श्लोकः)

(२४) नेह नानास्ति। ७३, १६ (बृहदारण्यके द्वितीयेऽध्याये चतुर्थब्राह्मणे, कठोपनिषदि चतुर्थवल्ल्याञ्च)

(२५) ब्रह्मविदाप्नोति परम्। ५९, १ (तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम्)

(२६) तत्साक्षादपरोक्षाद् ब्रह्म। ६४, २१ (बृहदारण्यकोपनिषदि चतुर्थब्राह्मणे)

(२७) ऋचः सामानि जज्ञिरे। ६६, २ (पुरुषसूक्ते)

(२८) अस्य क्षोणिपतेः॰ ६८, १६ (नैषधीयचरिते १२ सर्गे १०६ तमः श्लोकः)

(२९) तमेव विदित्वाऽतिमृत्युमेति। ७०, २५ (श्वेताश्वतरोपनिषदि चतुर्थेऽध्याये)

(३०) पाषण्डिनो विकर्मस्थान्॰ ७२, २ (मनुस्मृतौ चतुर्थेऽध्याये त्रिंशत्तमः श्लोकः)

(३१) नान्योतोऽस्ति॰ ७२, १५ (बृहदारण्यकोपनिषदि सप्तमब्राह्मणे)

(३२) तुच्छा निर्वचनीयाच॰ ७४, १ (वेदान्तसिद्धान्तमुक्तावल्ल्यां)

(३३) तदधिगमउत्तरपूर्वाघ्योः॰ ७५,५(ब्रह्मसूत्रेषु चतुर्थेऽध्याये द्वितीये पादे त्रयोदश सुत्रम्)

(३४) परमात्मात्मनो॰ ४३, २३ (परमहंसोपनिषदि)

(३५) विश्वस्य कर्ता॰ ४२, ४ (मुण्डकोपनिषदि प्रथमखण्डे)

(३६) तस्माद् गुरुम्प्रपद्येत॰ ३, १८ (भागवते ११ स्कन्धे ३ अध्याये २१ तमः श्लोकः)

(३७) आत्माऽव्ययो गुणः शुद्धः॰ २१, ७ (भागवते ११ स्कन्धे, २८ अध्याये ११ श्लोकः)

(३८) यावद्देहेन्द्रियप्राणै॰ २७, ४ (भागवते १२ श्लोकः)

(३९) असत्त्वादात्मनो॰ २६, २३ (भागवते त्रयोदशेऽध्याये तमः श्लोकः)

(४०) अहङ्कारकृतं बन्ध॰ २६, २१ (भागवते २९ तमः श्लोकः)

(४१) शोकहर्षभयक्रोध॰ २७, १८ (भागवते २८ तमे अध्याये, पञ्चदशः शःश्लोकः)

(४२) एक एव परो ह्यात्मा॰ ३०, ७ (भागवते १८ अध्याये, ३२ श्लोकः)

(४३) तस्मादिदं जगदशेष॰ ४५, ११ (भागवते १० स्कन्धे, १४ तमः अध्याये २२ तमः श्लोकः)

(४४) तेषु कालेष्वजायन्त॰ ३७, २३ (भागवते ७ अध्याये ५८ तमः श्लोकः)

(४५) ईक्षेत विभ्रममिदं॰ ४५, १८ (भागवते १८ अध्याये, ३२ तमः श्लोकः)

## स्कान्दवचनानि

(१) केचित्प्रधानं त्रिगुण॰ ३, २४ (स्कान्दे सूतसंहितान्तर्गतब्रह्मगीतायां द्वितीयेध्याये ६-९ श्लोकाः)

(२) प्रज्ञत्वेपि पृथक्त्वेन॰ २८ (स्कान्दे सूतगीतायां यज्ञवैभव खण्डोपरिभागे पञ्चमेऽध्याये ३३ तमः श्लोकः)

(३) चित्तवृत्त्यभिसम्बन्ध॰ २८, ८ (स्कान्देब्रह्मगीतायां तृतीयेध्याये १४ श्लोकः)

(४) सर्वेषान्तु मनस्तेन॰ २८, १४ (चतुर्थेऽध्याये, द्वितीयःश्लोकः)

(५) अन्यथा भानहेतुत्वा॰ ३३, ५ (शिवमाहात्म्यखण्डे अष्टमेऽध्याये १८-२१ श्लोकाः)

(६) माया च प्रलये काले परस्मिन् परमेश्वरे॰ ३५, २ ('' शिवमाहा. अष्टमेऽध्याये १७ श्लोकः)

(७) तमहंप्रत्ययव्याजात्॰ ३५, ८ (अष्टमेध्याये ३६ तमः श्लोकः)

(८) अथवा देवदेवस्य॰ ३६, १८ (सूतगीतायां यज्ञवैभवखण्डोपरिभागे तृतीयेऽध्याये २९ तमः श्लोकः)

(९) मायया निर्मितं सर्वं॰ ४६, ६ (चतुर्थेऽध्याये ३२ तमःश्लोकः)

(१०) प्रतीत्या केवलं शक्ति॰ ४९, ९ (ब्रह्मगीतायां यज्ञवैभवखण्डोपरिभागे पञ्चमेध्याये ३३ तमःश्लोकः)

(११) अतीन्द्रियार्थेविज्ञाने॰ ५०, १४ (सूतगीतायां तृतीयेध्याये ५-६ श्लोकः)

(१२) व्यावहारिकसत्यार्थं॰ ५१, २१ (ब्रह्मगीतायां द्वितीयेध्याये २१ तमःश्लोकः)

(१३) विद्यया परया विद्या॰ ६९, ९ ('' ब्रह्मगीतायां द्वादशेऽध्याये नवमः श्लोकः)

(१४) परमाद्वैतविज्ञान॰ ७४, ४ (सूतगीतायां तृतीयेध्याये ५४ तमः श्लोकः)

(१५) कल्पितानामवस्तूनां॰ ५१, १० (ब्रह्मगीतायां द्वितीयेध्याये १९ तमः श्लोकः)

इतोऽधिकान्यपि बहूनि श्रुतिस्मृतिपुराण शास्त्रीय
ग्रन्थवचनानि प्रमाणतयोपन्यस्तानि सन्ति,
येषां मूलं त्वरयान्वेषणेऽस्माभिर्नोपलब्धं
तत्परीक्षकाः कृपया स्वयमन्वेषयन्तु।

* * *

## अद्वैतचिन्तामणौ प्रमाणतयोपन्यस्ता महर्षयो ग्रन्थकर्तारश्च

(१) भगवान् वासुदेवः। २८, १२

(२) व्यासः। २४, १७

(३) मनुः। ७२, २

(४) भगवान् नारदः। ६४, ३

(५) भगवान्। ब्रह्मसूत्रकारः। ६३, ९

(६) सुरेश्वराचार्यः। २०, १

(७) वाचस्पतिमिश्रः। ३७, १५

(८) संक्षेपशारीरककारः। ३७, १८

(९) नृसिंहाश्रमः। ३, १; २०, ३; २९, १४

* * *

## अद्वैतचिन्तामणौ प्रमाणतयोपन्यस्ताग्रन्थाः।

(१) माण्डूक्योपनिषद्।

(२) मैत्रायण्युपनिषद्।

(३) रामायणम्।

(४) महाभारतम्।

(५) भागवतम्।

(६) भगवद्गीता।

(७) पराशरोपपुराणम्।

(८) ब्रह्मगीता।

(९) विष्णुपुराणम्।

(१०) पारमर्षं सूत्रम्। (ब्रह्मसूत्रम्)

(११) स्कान्दम्।

(१२) (न्याय) लीलावती।

(१३) (वेदान्त) सिद्धान्तमुक्तावली

## अद्वैतचिन्तामणौ प्रदर्शिता न्यायाः।

(१) यद्विशेषणयोरिति न्यायः। ५५, १३

(२) एकं सन्धित्सतोऽपरं प्रच्यवते। ६८, ३

**॥ श्रीः ॥**

## अद्वैतचिन्तामणौ अर्थविशेषपराणां निर्देशार्हशब्दानामकारादिवर्णक्रमानुसारि





## सूचीपत्रम्॥

**(अ)**

✲ ✲ ✲